'चंदामामा' के पाठकों को निवेदन

# अपाहिज

## यह शब्द बच्चों को पंगु बना सकता है !

मान लीजिए कि आप अपने हिमजोली दोस्त के साथ दौड़ नहीं सकते। मानिये कि आपका कोई हिमजोली दोस्त ही नहीं है। मानिये कि पोलिओ यह शब्द अथवा इस शब्द का अर्थ समझने के पहले ही आपको पोलिओ ने ग्रस लिया और आप जनम भर के पंगु बन गये।

हर साल भारत देश में २५०,००० बच्चों को पोलिओ पीड़ित करता है। ठोस प्रतिबंधक उपायों का अवलंबन न करने पर भारत के ग्रामीण क्षेत्र के हर १५०-२०० नये पैदा हुए बच्चों में से एक को पोलिओ होने की संभावना है. और इस पहले समय ही इसका ध्यान कीजिये कि भारत में अभी—इसी क्षण—पोलिओ से पीड़ित और जनम भर के अपाहिज बने ऐसे १.३ मिलियन बच्चे हैं। इन सब को समय पर ही इस व्याधि से बचाया जाता तो ............ ?

## पोलिओ प्लस

'रोटरी' का सहायता कार्यक्रम

आंतरराष्ट्रीय रोटरी ने पोलिओ-विमुक्ति के हेतु पोलिओ प्लस नाम के एक शिक्षणकारी कार्यक्रम का आयोजन किया है। इस कार्यक्रम के तहत रोटरी विश्व के सभी देशों के बच्चों को लगातार पांच साल पोलिओ-प्रतिबंधक डोज देनेवाली है।

इसके अलावा हर साल प्रगतिशील विश्व के ३.५ मिलियन बच्चों को काल-कवलित करनेवाले खसरा, घटसर्प, क्षय, धनुर्वात और काली खांसी जैसी सर्वसाधारण बीमारियों के लिये प्रतिबंधक उपाय किये जाएँगे।



## पोलिओप्लस

आंतरराष्ट्रीय रोटरी मुहिम
संसार के बच्चों को व्याधिमुक्त करने के हेतु



आप यह कर सकते हैं—

इस हिस्से को काटकर, निम्नलिखित पते पर रवाना करें।

**चेअरमन**
**पोलिओ प्लस कैंपेन ट्रस्ट,**
१२८ गोल्फ लिंक्स,
न्यू दिल्ली-११० ००३

---

जी हाँ, मैं पोलिओप्लस कैंपेन ट्रस्ट की सहायता करना चाहता हूँ। इसके साथ रु............का चैक/ड्राफ्ट भेज रहा हूँ।

नाम ____________________

ओहदा ____________________

कंपनी का पता ____________________

फोन नंबर ____________________

चैक/ड्राफ्ट 'पोलिओप्लस कैंपेन ट्रस्ट' के नाम बनाये जाएँ जो मुंबई में देय हों। यह अनुदान १९६१ के आय-कर कानून की धारा ८० (जी) के अनुसार करमुक्त है।

चन्दामामा

---

''जब तक अधिक कुछ करने की क्षमता आप में है, तब तक जो किया - वह पर्याप्त नहीं है।'' तुरन्त कार्यरत हों।

कविहृदयम् –

# अस्थाने इच्छा

विशालं शाल्मल्या नयनसुभगं वीक्ष्य कुसुमं
शुकस्यासीत् बुद्धिः फलमपि भवेदस्य सदृशम्।
इति ध्यात्वोपास्तं फलमपि च दैवात् परिणतं
विपाके तूलोऽन्तः सपदि मरुता सोऽप्यपहृतः।

– भल्लटशतकम्

कश्चन शुकः आसीत्। सः शाल्मलीवृक्षस्य पार्श्वे एव निवसति। कदाचित् शाल्मलीवृक्षः पुष्पितः। नयनमनोहराणि पुष्पाणि तत्र दृष्टानि। तदा शुकः अचिन्तयत् - 'प्रायः एतस्य फलम् अपि अपूर्वं मधुरं च भवेत्' इति। कालान्तरे तत् फलं पक्वम्। किन्तु फलस्य अन्तः किम् अस्ति? किं मधुरः रसः? न, अपि तु रसहीनः कार्पासः! सः कार्पासः अपि न शुकेन प्राप्तः। यतः सः कार्पासः वायुना झटिति नीतः आसीत्। हा हन्त! कीदृशी निराशा!

कविः अन्योक्त्या तृष्णावन्तं जनं जागरयति- "भोः, यत् लब्धं तेन तृप्तिम् अनुभवन् सुखेन जीवतु। अलभ्यस्य प्राप्तौ इच्छा कृता चेत् निराशा स्वतःसिद्धा" इति।

श्लोके प्रस्तुतः शुकः वस्तुतः तृष्णाकुलः। विशाले अरण्ये निवसतः शुकस्य किम् आहारप्राप्तौ क्लेशः? तथापि सः शुकः बाह्यसौन्दर्येण आकृष्टः अभवत्। स्वेच्छया प्राप्यमाणे आहारे अनासक्तिं प्रदर्शयन् शाल्मलीफलप्राप्तौ उद्युक्तः अभवत्। अस्थाने इच्छा कृता चेत् निराशा सहजा। शुकः भग्नमनोरथः जातः।

अस्थाने इच्छा - लोके सर्वत्र दृश्यमानः कश्चन दुर्गुणः। योग्यता यथा अस्ति, सामर्थ्यं यावत् अस्ति, प्रयत्नः यादृशः भवति तादृशं फलम् इति न कोऽपि चिन्तयति। कस्यचित् हस्ते कस्यचित् गृहे वा किमपि पश्यन्ति। तादृशं ममापि आवश्यकम् इति इच्छा आरब्धा एव! योग्यतादीनां चिन्तनं दूरे तिष्ठतु, वस्तुतः अपि एतत् आवश्यकं वा इत्यपि न चिन्तयन्ति। एतादृशस्य जीवनस्य एव फलं - जीवने सदा अतृप्तिः।

यस्य प्राप्तौ भवतः सामर्थ्यम् अपर्याप्तं, यदर्थं पर्याप्तमात्रेण प्रयत्नं कर्तुं न शक्नोति भवान्, तादृशस्य प्राप्तौ इच्छां मा प्रकटयतु। एतत् एव तृप्तेः रहस्यम्।

जिज्ञासा –

# 'गतवान्' इत्यादीनां भूतकालार्थे प्रयोगः

शिष्यः- आचार्य, अभिवादये!

आचार्यः- दीर्घायुष्मान् भवतु। किमर्थम् अद्य विलम्बः?

शि - अद्य एकं भाषणं श्रोतुं गतवान्। ततः इदानीम् आगच्छन् अस्मि।

आ - आरम्भे विनयः यः प्रदर्शितः तस्य रहस्यम् इदानीं ज्ञातम्। भाषणं कस्य आसीत्? राजकीयपुरुषस्य, उत चलनचित्रनटस्य?

शि - उभयोः अपि न। केनचित् संस्कृतज्ञेन भाषणं कृतम्।

आ - संस्कृतज्ञस्य भाषणम्! कः विषयः आसीत् भाषणस्य?

शि - 'व्यावहारिकी संस्कृतभाषा' इति आसीत् भाषणविषयः। भाषणे सः कञ्चन विषयं प्रस्तुतवान्। तत् श्रुतवतः मम मनसि विकल्पाः आरब्धाः।

आ - तादृशः सः अंशः कः भोः?

शि - गतवान् पठितवान् इत्यादीनि भूतकृदन्तरूपाणि वयं भूतकालार्थे उपयुञ्ज्महे। तन्नाम अगच्छत् इति वक्तव्ये गतवान्/वती/वत् इति, अपठत् इति वक्तव्ये पठितवान्/वती/वत् इति, एवम् इतरत्रापि वदामः। सः अभिप्रैति यत् एतादृशाः प्रयोगाः अनुचिताः इति।

आ - एवम् अभिप्रायं प्रकटयन् सः उपोद्बलकरूपेण किं प्रमाणम् उपस्थापयति?

शि - 'अगच्छत्' इति पदं गमनक्रियां बोधयति, 'गतवान्' इति पदं तु गमनकर्तारं बोधयति इति तस्य वादः।

आ - आम्, अगच्छत् = went इति, गतवान् = one who went इति च अर्थः।

शि - 'तदा च 'गतवान्' इत्यादिकं विशेषणत्वेन एव प्रयोक्तव्यम्। गतवान् रामः (Rama one who went) इत्येव प्रयोगः, न तु रामः गतवान् इति' इति सः प्रतिपादितवान्।

आ - विदितः तस्य भाषणकारस्य अभिप्रायः। एतत् न तथा युक्तम् इति अहं चिन्तयामि। 'रामः आगच्छत्' 'रामः गतवान्' इत्यनयोः शाब्दबोधे विलक्षणत्वम् अस्ति इति अहम् अङ्गीकरोमि। तथापि 'रामः गतवान्' इति प्रयोगः न करणीयः इत्यत्र मम सहमतिः नास्ति।

शि - 'रामः गतवान्' इत्यादिषु अस्तीत्यादिकस्य अध्याहारं कृत्वा अन्वयं प्रतिपादयामः खलु?

आ - आम्। अगच्छत्' 'गतवान्' इति उभयत्र अपि कर्त्रर्थे एव प्रत्ययः विहितः। किन्तु एकत्र प्रथमं क्रियायाः अनन्तरं कर्तुः च प्रतीतिः। अपरत्र प्रथमं कर्तुः अनन्तरं क्रियायाः च प्रतीतिः।

शि - एवं च तयोः भेदः तु स्फुटः एव खलु?

आ - तत् मया पूर्वम् एव उक्तं खलु - शाब्दबोधे भेदः अस्ति इति। तथापि व्यवहारे प्रयोगेण न दोषः इति अहं भावयामि। यतः एतादृशाः प्रयोगाः महाकाव्येषु इतरग्रन्थेषु च यथेष्टं दृश्यन्ते।

शि - गतवान् इत्यादीनां भूतकालार्थे प्रयोगः इति?

आ - आम्। द्वित्राणि उदाहरणानि पश्यतु।

* पञ्चतन्त्रे (मित्रभेदे) - एवं श्रुत्वा राजा चिन्तितवान्।

" पिङ्गलकोऽपि ...... न किञ्चिदुक्तवान्।

* दशकुमारचरिते (पूर्वपीठिकायाम्) -

प्रभातसमये सुस्वप्नमवलोकितवती।

परिचर्याकरणाय आनीतवत्यस्मि।

* रघुवंशे - ऋचेवोदर्चिषं सूर्यं रामं मुनिरुपस्थितः। (१५-७६)

* रामायणे - सीते! मृतस्ते श्वशुरः। (II १०२-१५)

एतादृशानि उदाहरणानि शतशः प्रदर्शयितुं शक्नुमः। येषां प्रयोगं वयं परमप्रमाणभूतं मन्यामहे तादृशेषु महाभाष्यादिग्रन्थेषु अपि भूतकृदन्तैः वाक्यपरिसमाप्तिः कृता दृश्यते। अतः व्यवहारे वाक्यपरिसमाप्त्यर्थं भूतकृदन्तस्य प्रयोगे कृते न दोषाय।



# चन्दमामा

एप्रिल्-१९८८

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. २-५०

वार्षिकं ग्राहकशुल्कं रू. ३०-००

A CHANDAMAMA PUBLICATION

# चन्दमामा

संस्थापकः– 'चक्रपाणिः' सम्चालकः– 'नागिरेड्डी'

'अहं तु एतावत् कार्यं करोमि। किन्तु कोऽपि साहाय्यकः मम नास्ति। अहम् एकाकी संवृत्तः अस्मि' इति अपश्रुतिः प्रायः बहुत्र श्रूयते। किमर्थम् एतादृशी परिस्थितिः उद्भवति? अस्माकं कार्यशैल्यां को वा लोपः?

'सहकारिणः दैवयोगात् अकस्मात् न लभ्यन्ते। ते निरन्तरेण स्वपरिश्रमेण निर्मातव्याः' इत्येतम् अंशं वयं प्रायः विस्मरामः।

'कश्चित् स्वयं कार्यप्रेरणां प्राप्नुयात्, स्वयम् एव अस्माकं प्रयत्नस्य गाभीरतां परिचिनुयात्, स्वयं च अस्माकं समीपम् आगत्य साहाय्यं निवेदयेत्' इति यदि निरीक्षा अस्माकं स्यात् तर्हि सा कथं वा पूरिता भवेत्? कदाचित् कस्यचित् पूरिता भवेत्, यदि सः तादृशभाग्यवान् स्यात्!

कार्यार्थं निरपवादसमर्पणम् अस्माकं स्यात्। निर्व्याजा प्रीतिः अपि इतरेषु भवेत्। सम्पर्के आगतस्य एकैकस्य अपि विषये चिन्तनीयम्- 'एषः केन प्रकारेण मम सहकारी भवेत्?' इति। निरन्तरसहवासः वर्धनीयः। सहचिन्तनेन, विचारविमर्शेन ज्ञानादिलाभप्रापणेन वा सः समीपे आनेतव्यः। सामर्थ्यानुगुणं कार्यं दत्त्वा तस्मिन् आत्मविश्वासः पूरणीयः।

'स्वप्रयासेन एव सहकारिणः लभ्यन्ते, न तु दैवबलात्' इति एषः अंशः कदापि न विस्मरणीयः।

सम्पुटः–५ एप्रिल्–८८ सञ्चिका–१

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू. ३०-००

चंदा मामा बूझ के हारे –
छोटे छोटे, प्यारे प्यारे,
रंगबिरंगे कैसे तारे ?
तारे नहीं, ये जेम्स हैं सारे.

Cadbury's **GEMS**

जो चाहे खोले, जो चाहे खाले.



# रसवार्ता:





## अन्तरिक्षवसतौ अग्रगण्यः

सोवियत्‌देशीयः ४२ वर्षीयः कामावेन्को नामकः सामान्यतः २३६ दिनानि यावत् अन्तरिक्षे तिष्ठन् नूतनं विक्रमं स्थापितवान् अस्ति। तस्मिन् अवधौ तेन तत्र अनेकानि अनुसन्धानकार्याणि कृतानि।

## भूगर्भस्थिता द्वारका

पुराणैः ज्ञायते यत् कृष्णावतारसमाप्तेः अनन्तरं तेन निर्मिता द्वारकानगरी समुद्रगर्भं प्राविशत् इति। एषु दिनेषु तादृशानि प्रमाणानि उपलभ्यमानानि सन्ति यैः ज्ञायते यत् ६००० वर्षेभ्यः पूर्वं सौराष्ट्रतीरे किञ्चन नगरं समुद्रे निलीनम् आसीत् इति।





## आर्याणाम् आक्रमणं मिथ्या

आर्याणाम् आक्रमणात् भारतीया हरप्पासंस्कृतिः नष्टा इति सर्वत्र श्रूयते। एषः वादः न युक्तः इति अभिप्रैति प्रसिद्धः इतिहासज्ञः डा।। भगवान् सिंहः। आर्यसंस्कृतौ हरप्पासंस्कृतौ च विशेषतः भेदः न दृश्यते इति सः सयुक्तिकं प्रतिपादयति।

## लघुतमः कुरानुग्रन्थः

नातिपूर्वं महम्मद कमाल हुसेन परिवारजनाः २.०x२.६ सें.मी. परिमाणकं हस्तलिखितं कुरानुग्रन्थं दायरूपेण हस्ते धरन्ति स्म। एषः एव प्रपञ्चे लघुतमः इति परिगण्यते। मिलियन् डालरमितमूल्यकः एषः लघुतमः कुरानुग्रन्थः दुबायिनगरे सुरक्षितं स्थापितः अस्ति।



# हंसकः डिम्भकः च

साल्वदेशस्य राजा ब्रह्मदत्तः बहुकालपर्यन्तं निस्सन्तानः आसीत्। एकदा कुलगुरुः ब्रह्मदत्तम् उक्तवान्- "राजन्! प्रजाः सर्वाः पुत्रसमानाः एव खलु? अतः तासु सुयोग्यम् एकं चित्वा तं सिंहासनस्य उत्तराधिकारिणं करोतु। एषः एव युक्तः मार्गः" इति।

किन्तु एषः विचारः ब्रह्मदत्ताय न अरोचत। सः महता तपसा शिवं सन्तोष्य सन्तानप्रापकं वरं प्राप्तवान्। अल्पे एव काले सः हंसकडिम्भकयोः पिता जातः।

कुलगुरुः राजानं सूचितवान्- "एतयोः विद्याभ्यासार्थं विशेषव्यवस्थां करोतु। तौ सच्चरित्रौ नीतिनिपुणौ च यथा भवेतां तथा विशेषप्रयत्नः करणीयः" इति।

किन्तु बहोः कालात् अनन्तरं जातौ इत्यतः एतौ दूरं प्रेषयितुं दण्डयितुं वा न इच्छति महाराजः। अतिलालनेन पोषितौ तौ जरासन्धस्य स्नेहं प्राप्तवन्तौ। अजेयत्वं प्राप्तुम् इच्छन्तौ तपसा ब्रह्मणः अनुग्रहं प्राप्तवन्तौ।

अहङ्कारमदमत्तौ तौ सज्जनानां पीडनम् आरब्धवन्तौ। पितुः द्वारा राजसूययागं कारयित्वा सर्वैः राजभिः प्रतिवर्षं शुल्कं दातव्यम् इति आदिष्टवन्तौ। द्वारकाधिपतिं श्रीकृष्णं प्रति अपि एषा सूचना प्रेषिता।

एतयोः अहङ्कारकथां पुनः पुनः श्रुत्वा श्रान्तः कृष्णः तयोः समापनार्थम् एकम् उपायं चिन्तितवान्। सः गुप्तरूपेण हंसकं बन्धने स्थापितवान्, हंसकः मृतः इति वार्तां प्रसारितवान् च। एषा वार्ता डिम्भकेन अपि श्रुता। सहोदरस्य वियोगदुःखं सोढुम् अशक्तः सः यमुनानद्यां स्वप्राणान् अर्पितवान्। डिम्भकस्य मरणवार्तां श्रुत्वा हंसकः अपि आत्महत्यां कृतवान्।

केषाञ्चित् दिनानाम् अनन्तरं महाराजं दृष्ट्वा कुलगुरुः उपदिष्टवान्- "सन्तानप्राप्तिमात्रेण तृप्तैः न भवितव्यम्। जातमात्रस्य शिक्षणं सन्मार्गे प्रवर्तनं च मातापित्रोः आद्यं कर्तव्यम्। एतत् कर्तव्यं सम्यक् न अनुष्ठितम् इत्यतः भवतः एषा गतिः" इति।

ब्रह्मदत्तः आत्मनः कर्तव्यलोपार्थं बहुधा पश्चात्तापम् अनुभूतवान्।





# स्वप्नसौभाग्यम्

अवन्तीपुरराज्ये कस्मिंश्चित् ग्रामे कश्चन युवकः आसीत्। सः विद्याभ्यासं न कृतवान्। कार्ये अपि न निपुणः। जनाः तम् 'अयोग्यः' इत्येव आह्वयन्ति स्म। कालान्तरे तदीयं नाम तदेव अभवत्।

सः बाल्यतः अपि अपूर्वाः शक्तीः सम्पादयितुम् इच्छति। संन्यासिनः एवं शक्तिमन्तः भवन्ति इति सः श्रुतवान् आसीत्।

तस्मिन् ग्रामे स्थिते शिवालये तदा तदा संन्यासिनः आगत्य निवसन्ति स्म। एषः तादृशानां संन्यासिनां सेवां सदा कुर्वन् दिनानि यापयति।

एकदा हिमालयात् आगतः कश्चन हठयोगी अयोग्यस्य ग्रामम् आगतवान्। सः वृद्धः आसीत्। ग्रामप्राप्तिसमये अस्वस्थः आसीत् अपि। अयोग्यः तस्य सेवां श्रद्धया कृतवान्। तदीयां कृपादृष्टिं सम्पादितवान् च।

केषाञ्चित् दिनानाम् अनन्तरं सः हठयोगी स्वकीयं मरणं सन्निहितं ज्ञात्वा अयोग्यम् उक्तवान्- "भोः, भवतः मनसि किम् अस्ति इति अहं जानामि। भवान् श्रद्धया मम सेवां यत् कृतवान् तेन अहं सन्तुष्टः अस्मि" इति। अनन्तरं सः योगी अयोग्यस्य शिरसि हस्तं स्थापयित्वा मन्त्रम् उच्चारयन्- "अद्य आरभ्य भवान् यत् स्वप्ने पश्यति तत् साकारताम् आप्नोति। किन्तु एतेन भवतः हितं सिध्यति, उत अहितम् इति अहं न जानामि। भवतः अदृष्टं यथा अस्ति तदनुगुणं फलं प्राप्स्यति भवान्" इति उक्तवान्।

अनन्तरं सः हठयोगी प्राणान् त्यक्तवान्। अयोग्यः तस्य उत्तरक्रियादिकं समाप्य स्वकीयस्य अदृष्टस्य परीक्षणार्थं अवन्तीपुरं प्रति प्रस्थितवान्। नगरसीमायां कस्याञ्चित्



धर्मशालायां स्थितवान् च।

तत्र अन्ये अपि यात्रिकाः आसन्। ते महाराजस्य शिववर्मणः गुणानां प्रशंसां कुर्वन्तः आसन्। एतत् गुणगानम् अयोग्येन अपि श्रुतम्। राजा दानगुणेन शिबिः इव इति एकः वदति स्म। शौर्येण अर्जुनः इव इति अपरः प्रशंसां करोति स्म।

एतत्सर्वं श्रुतवतः अयोग्यस्य मनसि भावना आगता यत् कथञ्चित् महाराजस्य कृपाश्रयः प्राप्तः चेत् जीवनं सुखमयं भवेत् इति। एवं चिन्तयन् एव सः निद्रावशः अभवत्।

निद्रायां तेन कश्चन स्वप्नः दृष्टः- 'मध्यरात्रे राजा शिववर्मा हस्तेन खड्गं स्वीकृत्य राजमार्गे गच्छन् अस्ति। तदा कश्चन मूकः वृद्धः हस्तसङ्केतेन तम् आह्वयति। राजा तम् अनुसृत्य गत्वा एकं शिथिलं गृहं प्रविशति। अत्रान्तरे सः मूकः वृद्धः अदृश्यः भवति। तत्समये उत्थितेन चक्रवातेन शिववर्मा हठात् नीतः। दूरे कुत्रापि पातितः, च। अदृष्टवशात् राजा कस्मिंश्चित् सरोवरे पतितः येन च तस्य प्राणापायः कोऽपि न जातः' इति।

एवं स्वप्नं दृष्ट्वा अयोग्यः जागरितः अभवत्। अनन्तरदिने सः महाराजस्य दर्शनं प्राप्य आत्मनः परिचयं निवेद्य रात्रौ दृष्टं स्वप्नम् अपि निवेदितवान्।

राजा तु उपहासपूर्वकम् उच्चैः हसन्- "भोः! उदरपूरणार्थम् एवम् असत्यं किमर्थं वक्तव्यम्?" इति उक्त्वा दश सुवर्णनाणकानि दत्त्वा तं प्रेषितवान्।

अयोग्यः मुखभङ्गं प्राप्य म्लानवदनः सन् ततः धर्मशालां प्रति आगतवान्।

अनन्तरदिने महाराजः तं स्वसमीपम् आनायितवान्। उपस्थितस्य अयोग्यस्य स्कन्धे हस्तं स्थापयन्- "भवता ह्यः यत् उक्तं तथैव प्रवृत्तम् अपि। कयाचित् दुष्टशक्त्या पीडितः चेदपि दैववशात् सजीवं प्रत्यागतवान्। भवता एषा घटना पूर्वम् एव स्वप्ने दृष्टा इति तु आश्चर्यस्य विषयः। भवान् तु अपूर्वः। भवद्विषये अहं सन्तुष्टः अस्मि। मम आस्थाने भवान् कीदृशम् उद्योगम् इच्छति? यत् पृच्छति तत् ददामि"

इति उक्तवान्।

तदा अयोग्यः उक्तवान्- "अश्वम् आरुह्य सञ्चारः मम अतीव प्रियः" इति। राजा तद्दिने एव तम् अश्वशालाधिपतिस्थाने नियोजितवान्। ततः प्रतिदिनम् अपि इष्टम् अश्वम् आरुह्य सर्वत्र सञ्चरन् सन्तोषेण दिनानि यापितवान् अयोग्यः।

केषाञ्चित् दिनानाम् अनन्तरम् अयोग्यः महाराजं दृष्ट्वा- "प्रभो! ह्यः रात्रौ मया कश्चन दुःस्वप्नः दृष्टः" इति उक्तवान्।

"कीदृशः स्वप्नः सः? निस्सङ्कोचं वदतु" इति उक्तवान् महाराजः।

"महाप्रभो! भवान् महासभायाम् उन्नतासने उपविष्टः अस्ति। तदा कश्चन संन्यासी आगत्य वदति- 'भोः, अहं कः इति भवान् इदानीं न जानाति। पूर्वं भवान् मम शिष्यः आसीत्। राजभोगेषु भवतः अत्यासक्तिः इति ज्ञात्वा दशवर्षात्मकं भोगजीवनं मया अनुगृहीतम्। स च कालः एतावता समाप्तः। आगच्छतु मया सह' इति। सः मन्त्रजलेन भवन्तं सिञ्चति च। तदा भवान् गतजीवनं पूर्णं स्मरन् शिरः अवनमय्य तिष्ठति। 'गुरुदेव, भवता सह एषोऽहं प्रस्थितः' इति उक्त्वा समीपस्थस्य मम शिरसि किरीटं संस्थाप्य, मुद्राङ्गुलीयकं मम अङ्गुल्यां स्थापयन्- 'अद्य मदीयं कर्तव्यं समाप्तम्। इतःपरं राज्यभारनिर्वहणं भवतः' इति माम् उक्त्वा गच्छति" इति स्वप्नस्य विवरणं दत्तवान् अयोग्यः।

राजा शिववर्मा आश्चर्येण अयोग्यस्य





स्वप्नं श्रुतवान्। अनन्तरं कामपि प्रतिक्रियाम् अप्रदर्श्य उत्थाय अन्तःपुरं गतवान् च।

अयोग्येन स्वप्ने यथा दृष्टं तथैव अनन्तरदिने प्रवृत्तम्। पूर्णायां राजसभायां शिववर्मा अयोग्यस्य शिरसि किरीटं संस्थाप्य तापसं गुरुम् अनुसृतवान्। जनाः आश्चर्येण मूकाः सन्तः, शिववर्मणः गमनेन खिन्नाः सन्तः अपि नूतनराजस्य जयम् उद्घोषितवन्तः।

तस्मिन् एव समये कश्चन दूतः अयोग्यसमीपम् आगत्य- "महाराज! शुभे अस्मिन् सन्दर्भे मया अप्रिया वार्ता यत् निवेद्यते तदर्थम् अहं क्षन्तव्यः। अस्माकं प्राचीनशत्रुः अनन्तसेनः युद्धार्थम् आगतः अस्ति। तेन सह महती सेना अपि आगता अस्ति। अस्माकं सेना युद्धसम्मुखीकरणार्थं सिद्धा कृता अस्ति। भवदर्थं बहिः रथः प्रतीक्षते। सेनानायकः भवतः उपस्थितिं प्रतीक्षमाणः अस्ति" इति निवेदितवान्।

एतत् श्रुत्वा अयोग्यः नितरां भीतः। स्वयं खड्गग्रहणम् एव अजानन् सः युद्धं कथं वा कुर्यात्? अतः सः आतङ्कपूर्णेन स्वरेण- "मन्त्रिवर्य! पूर्वतनः शत्रुः इदानीम् पुनराक्रमणं कुर्वन् अस्ति इत्यस्य अर्थः- तस्य सेनासामर्थ्यं विशेषतः अस्ति इत्येव। अतः इदानीं युद्धेन प्रयोजनं नास्ति। सः सन्ध्यर्थं सिद्धः भवेत् वा इति प्रयत्नं कुर्वन्तु" इति मन्त्रिणम् उक्त्वा सिंहासनात् उत्थाय गतवान्।

रात्रौ हंसतूलिकातल्पे सुप्तस्य अपि अयोग्यस्य निद्रा नास्ति। बहुधा इतस्ततः लुण्ठनानन्तरं तेन निद्रा प्राप्ता। निद्रायां तेन कश्चन स्वप्नः अपि दृष्टः। स्वप्ने एषः प्रासादतः पलायमानः अस्ति। अन्यः कश्चित् अनुसृत्य आगत्य एतं गृह्णाति। अत्रान्तरे तेन जागरणं प्राप्तम्।

प्रातःकाले सः उत्थाय स्वप्ने यथा दृष्टं तथैव धावनम् आरब्धवान्। द्वारसमीपे रक्षकवेषेण स्थितः शिववर्मा अनुसृत्य आगत्य तं गृहीतवान्। भटवेषेण स्थितस्य महाराजस्य परिचयं प्राप्तवान् अयोग्यः। भीतस्य तस्य शरीरे महत् कम्पनम्

आरब्धम्।

शिववर्मा तस्य स्कन्धे हस्तं स्थापयन्- "भोः, भीतिः मास्तु। भवान् भविष्यतः ज्ञानी सामुद्रिकः इति मम विचारः आसीत्। किन्तु भवान् कयाचित् क्षुद्रशक्त्या ग्रस्तः अस्ति। तद्बलतः एव भवान् स्वप्ने यत् पश्यति तथैव प्रचलति। भवता यः प्रथमः स्वप्नः दृष्टः तत्समये भवान् मम हितकामनया प्रेरितः आसीत्। यतः भवान् तद्दिने मम दानगुणविषये पराक्रमविषये च श्रुतवान् आसीत्। अतः भवान् मम प्राणरक्षणरूपं स्वप्नं दृष्टवान्। 'सत्यं खलु?" इति पृष्टवान्।

"आं महाराज! धर्मशालायां स्थितानां यात्रिकाणां मुखतः मया भवतः गुणातिशयाः श्रुताः आसन्" इति भीत्या एव उत्तरं दत्तवान् अयोग्यः।

राजा शिववर्मा मन्दहासं प्रकटयन् पुनः उक्तवान्- "अनन्तरकाले मम आश्रमे स्थिते भवति स्वार्थभावना उत्पन्ना। मम प्राणापायः करणीयः इति विचारः भवति न उत्पन्नः इति तु मम सौभाग्यम्। राजभोगादीन् प्राप्तुम् इच्छन् भवान् द्वितीयं स्वप्नं दृष्टवान्। तृतीयस्वप्नसमये भवतः मनसि भीतिः आसीत्। एतेषां सर्वेषां स्वप्नानां कारणं भवतः मनसः विकारः एव। स्वप्नः साकारताम् अवाप्नुयात् एव इत्यतः अहं द्वितीये स्वप्ने भवता यथा दृष्टं तथैव कारितवान्। मम राज्यत्यागः शत्रोः आक्रमणम् इत्यादीनि सर्वाणि कल्पितानि एव" इति।

अश्रूणि स्रावयन् अयोग्यः महाराजस्य पादयोः पतितवान्। राजा तम् उत्थाप्य- "भोः, मम आस्थाने चञ्चलचित्तस्य भवतः स्थितिः सर्वथा अनुचिता। तत्र आसनस्य उपरि सहस्रं सुवर्णनाणकानि सन्ति। तानि स्वीकृत्य इतः गच्छतु। कुत्रापि श्रमेण जीवतु च" इति उक्तवान्।

अयोग्यः महाराजं नमस्कृत्य तेन सूचितं सुवर्णनाणकानां ग्रन्थिं स्वीकृत्य ततः मौनं निर्गतवान्।





# प्रथमचौर्यम्

गोपालः चकोरः च आत्मीयौ स्नेहितौ। किन्तु तौ अतीवनिर्धनौ। स्वग्रामे जीविकोपायम् अपश्यन्तौ तौ नगरं गतवन्तौ। उद्योगार्थं प्रयत्नम् आरब्धवन्तौ च। अत्रापि महती निराशा एव तयोः। अन्ते तौ निश्चितवन्तौ यत् कुत्रचित् चौर्यं कृत्वा विपुलं धनं सम्पाद्य ग्रामं प्रति पलायनं करणीयम् इति।

नगरे सर्वत्र अटन्तौ तौ सायङ्कालसमये एकं कीलितं गृहं चौर्यार्थं निश्चितवन्तौ। गोपालः शलाकादिभिः तालम् उद्घाटयितु जानाति स्म। तयोः योजना आसीत् यत् रात्रौ गोपालः स्वकौशलेन तालम् उद्घाटयिष्यति, चकोरश्च अन्तः गत्वा अमूल्यानि वस्तूनि धनं च स्वीकृत्य पृष्ठतः स्थितेन द्वारेण प्रत्यागमिष्यति, तावत्पर्यन्तं गोपालेन द्वारसमीपे जागरूकतया स्थातव्यम् इति।

योजनानुगुणं अन्धकारप्रसारानन्तरं चकोरः गृहं प्रविष्टवान्। किन्तु गृहे अमूल्यानि वस्तूनि तेन न दृष्टानि। पाकशालायाम् अपि सामान्यानि पात्राणि एव आसन्। एकस्मिन् प्रकोष्ठे एका प्राचीना अयःपेटिका दृढं कीलिता दृष्टा, तावदेव।

एतत्सर्वं दृष्ट्वा चकोरः पृष्ठतः स्थितेन द्वारेण आगत्य गोपालं सर्वं निवेदितवान्। अनन्तरं तौ इतस्ततः विचार्य ज्ञातवन्तौ यत् तत् गृहं नीलकण्ठनामकस्य वज्रवणिजः इति।

गोपालः चकोरम् उक्तवान् - "मित्र। भवान् गृहस्य अन्तः प्रविश्य अट्टे उपविशतु। यदा गृहस्य यजमानः निद्रावशः भविष्यति तदा तदीयां कुञ्चिकां स्वीकृत्य तया पेटिकाम् उद्घाटयतु। धनसुवर्णादिकं चोरयित्वा बहिः आगच्छतु च" इति।

"नीलकण्ठः मध्ये जागरितः भवति चेत्

किं करणीयम्?" इति पृष्टवान् चकोरः।

"तदर्थं मम समीपे औषधम् अस्ति" इति उक्त्वा एकां कूपिकां दत्त्वा पुनः उक्तवान् गोपालः– "एतस्याः आवरणम् अपनीय तस्य नासिकायाः पुरतः गृह्णातु। सः पुनः प्रातःकालपर्यन्तं न उत्थास्यति" इति।

एतम् उपायम् अङ्गीकृत्य चकोरः पुनः गृहस्य अन्तः गतवान्। अनन्तरं गोपालः यथापूर्वं द्वारं कीलितवान्। चकोरः अन्तः अट्टे उपविष्टवान्।

विलम्बेन आगतः यजमानः नीलकण्ठः स्नात्वा भोजनं समापितवान्। अनन्तरं दीपस्य पुरतः उपविश्य गणनादिकं किञ्चित् कृतवान्। अट्टे मौनम् उपविष्टवन्तं चकोरं तु निद्रा बाधते।

किञ्चित्कालानन्तरं नीलकण्ठः शयनं कर्तुम् इच्छन् शय्यां प्रसारितवान्। तदा केनचित् क्रियमाणः बहिर्द्वारताडनशब्दः तेन श्रुतः।

"कः भोः?" इति पृष्टवान् नीलकण्ठः।

"रामपुरतः आगच्छन् अस्मि श्रीमन्! भवतः श्वशुरेण अहं प्रेषितः। भवतः ज्येष्ठः पुत्रः सर्पेण दष्टः" इति वदन् पुनः अङ्गुल्या द्वारं ताडितवान् आगन्तुकः।

दिग्भ्रान्तः नीलकण्ठः त्वरया गत्वा द्वारम् उद्घाटितवान्। तदा सः आगन्तुकः झटिति अन्तः प्रविश्य द्वारं पिधाय छुरिकां प्रदर्शयन्– "यदि कोलाहलं कुर्यात् तर्हि



प्राणैः वियुक्तः भवेत्" इति भाषितवान्।

"कः भवान्?" इति भीत्या एव पृष्टवान् नीलकण्ठः।

"न परिचिनोति माम्? चोरः अस्मि। पेटिकाम् उद्घाट्य धनसुवर्णादिकम् अर्पयतु" इति उक्तवान् चोरः।

नीलकण्ठः एतत् निराकृतवान्। तदा कुपितः चोरः नीलकण्ठं गृहीत्वा तदुपरि प्रयोगार्थं छुरिकाम् उन्नीतवान्। अपरक्षणे अट्टात् उत्प्लुतः चकोरः चोरस्य हस्तस्य उपरि बलात् ताडनं दत्तवान्।

चोरः क्षणकालं स्तब्धः। अनन्तरक्षणे सः चकोरस्य उपरि प्रत्याक्रमणार्थम् उद्युक्तः जातः। तदा नीलकण्ठः वेगेन परिवृत्य चोरं दूरीकृतवान्। अनन्तरम् उभौ अपि सम्भूय

चोरं रज्ज्वा बद्धवन्तौ।

नीलकण्ठः बहिः गत्वा उभौ राजभटौ आनीय प्रवृत्तं समग्रं निवेदितवान्। भटौ तं चोरम् आकृष्य नीतवन्तौ।

अग्रे किं करणीयम् इति चकोरः इतस्ततः पश्यन् आसीत्। तदा नीलकण्ठः पृष्टवान् - "कः भवान्? मम गृहस्य अट्टं कथम् आगतवान्?" इति।

चकोरः भीत्या कम्पमानः - "श्रीमन्! मां क्षाम्यतु कृपया" इति सम्प्रार्थ्य गोपालस्य स्वस्य च नगरं प्रति आगमनस्य कारणं निवेद्य, गृहप्रवेशप्रसङ्गम् अपि निवेद्य "आवयोः इष्टपूर्तितः पूर्वम् एव एषः चोरः अन्तः प्रविष्टवान्" इति उक्तवान्।

नीलकण्ठः क्षणकालानन्तरं चकोरं शान्तेन स्वरेण पृष्टवान् - "एतत् भवतः प्रथमं चौर्यं वा?" इति।

"आम्" इति अङ्गीकृतवान् चकोरः।

"मया अपि तथैव चिन्तितम् आसीत्। यदि भवान् चतुरः चोरः स्यात् तर्हि मां न अरक्षयिष्यत्। यदा सः चोरः मम मारणं समाप्य सर्वस्वं स्वायत्तीकरोति तदा तं भापयित्वा अर्धं भागं भवान् स्वीकरिष्यत्" इति उक्तवान् नीलकण्ठः।

"तदा किम् अकरिष्यम् इति अहं न जानामि। किन्तु मम चौर्यस्य विरोधः आचरितः चेत् भवान् मारणीयः इत्येव मम विचारः आसीत्। किन्तु तेन चोरेण कृतम् आक्रमणं मया द्रष्टुं न शक्तम्। न जाने, अत्र किं कारणम् इति" इति उक्तवान् चकोरः।

तदा नीलकण्ठः हसन् उक्तवान्— "कदाचित् परिस्थितिवशात् दुष्टता प्रदर्शिता भवेत्। तथापि सद्गुणाः सर्वेषु अपि भवन्ति एव। विशिष्टे सन्दर्भे ते अन्तरङ्गप्रेरणया प्रकाशिताः भवन्ति" इति।

अनन्तरं नीलकण्ठः चकोरद्वारा गोपालं स्वसमीपम् आनायितवान्। तयोः कृते उद्योगावकाशं कल्पितवान् च। ततः प्रभृति नगरे एव श्रमेण कार्यं कुर्वन्तौ धनं सम्पादयन्तौ च तौ सुखेन जीवितवन्तौ।






# ४

[शिथिलायाः दुर्गभित्तेः मध्ये प्राप्तस्य स्त्रीविग्रहस्य रक्षणार्थं व्यवस्थां कृत्वा विनोदः जलपातम् अतिक्रम्य खानभूमिं प्रविष्टवान्। तत्र कश्चन कुब्जः तेन दृष्टः। कुब्जात् आत्मनः रक्षणार्थं पलायमानं विनोदं केचन भटाः अनुसृतवन्तः। पर्वतशिखरं पश्यन्तः ते कुत्रचित् स्तब्धाः जाताः। विनोदः अपि तस्यां दिशि दृष्टिं प्रसारितवान्। तदनन्तरम् ......]

लघुपर्वतस्य उपरि अमूल्यैः वस्त्राभरणैः विभूषितः षोडषवर्षीयः कश्चन सुन्दरः तरुणः निश्चलतयां स्थितः आसीत्। भयङ्करः कश्चन मृगः लालां स्रावयन् तस्य समीपं मन्दया गत्या गच्छन् आसीत्।

सैनिकाः परस्परम् आतङ्केन वदन्ति स्म- "अहो! युवराजः! युवराजम् एव एषः पवित्रः महामृगः खादति खलु, हन्त!" इति। किन्तु महामृगं ततः अपसारयितुं कोऽपि उद्युक्तः न जातः।

एतत् दृष्ट्वा विनोदः असमाधानेन- "युवराजं खादितुम् उद्युक्तं महामृगं दृष्ट्वा अपि भवन्तः शिलावत् तूष्णीं तिष्ठन्तु खलु! धिक् भवतः। किं पश्यन्ति? तं मृगं मारयन्तु" इति वदन् खड्गं हस्ते स्वीकृतवान्।

सैनिकाः विनोदं आश्चर्येण पश्यन्तः तूष्णीं स्थितवन्तः।

तत्समये कश्चन रथः वायुवेगेन तत्र

"मनोजवासः"



आगतः। उभौ सुदृढकायौ पुरुषौ तस्य रथस्य वाहकौ आस्ताम्। विनोदः एतत् दृष्ट्वा आश्चर्यचकितः - मानवाः एतावता वेगेन रथम् आक्रष्टुं कथं शक्नुवन्ति? इति।

"महाराजः जयतात्!" इति जयघोषं कुर्वन्तः सैनिकाः रथस्थं महाराजं नमस्कृतवन्तः।

राजा लघुपर्वतस्थं स्वपुत्रं पश्यन्- "हा पुत्र! अस्मान् त्यक्त्वा गच्छति खलु!" इति उद्गारं प्रकटयन् आवेगवशात् विलपनम् आरब्धवान्।

रुदन्तं महाराजं दृष्ट्वा विनोदः उक्तवान्- "महाराज! पुत्रस्य रक्षणार्थं सैनिकान् आदिशतु तावत्। भवान् अपि रोदिति चेत् कार्यं कथं सिध्येत्? किं रोदनेन कार्यं सिध्यति?" इति।

राजा तु असहायकतां मुखभावेन प्रदर्शयन् आर्तदृष्ट्या विनोदं पश्यन् हताशः इव मौनं स्थितवान्।

अत्रान्तरे सः महामृगः युवराजस्य अतिसमीपम् आगच्छत्। युवराजं खादितुम् अग्निज्वालासदृशीं जिह्वां प्रासारयत् च। तदा विनोदः विद्युद्वेगेन प्लुतगत्या गत्वा क्षणाभ्यन्तरे खड्गेन तस्य मृगस्य शिरश्छेदम् अकरोत्।

अधः पतितं मृगस्य शिरः लुठत् राज्ञः रथस्य पार्श्वे आगत्य अतिष्ठत्। इतोऽपि तस्य नासिकातः अग्निज्वाला निस्सरति। तया ज्वालया तत्समये तत्र उपस्थितस्य कुब्जस्य वृद्धस्य श्मश्रुणः कश्चन भागः दग्धः अभवत्।

"किमेतत् अकार्यम्! किं कृतं भवता?" इति विनोदं पश्यन् कोपेन गर्जितवान् सः कुब्जः वृद्धः।

"युवराजं खादितुम् एषः महामृगः प्रवृत्तः आसीत्। एते सैनिकाः तु सर्वं पश्यन्तः अपि जडतया स्थिताः आसन्। यस्य बाहौ शक्तिः अस्ति, यस्य रक्ते शौर्यं प्रवहति, सः किम् एतादृशं दृष्ट्वा अपि मौनं तिष्ठेत्? तं मृगं मारयन् अहं मम कर्तव्यं पालितवान्। अत्र अकार्यत्वं कथम्?" इति पृष्टवान् विनोदः।

"किं पश्यन्ति? एतं दुष्टं बद्ध्वा कारागारे



"स्थापयन्तु" इति सैनिकान् आज्ञापितवान् सः कुब्जः वृद्धः।

"आम्। एतं बद्ध्वा राजभवनसमीपस्थे कारागारे स्थापयन्तु" इति आज्ञापितवान् राजा अपि।

अत्रान्तरे पर्वतात् अधः आगतः युवराजः विनोदं कृतज्ञताभावेन पश्यन् स्थितवान्।

भटाः विनोदं बद्ध्वा कारागारं प्रति नीतवन्तः।

महाराजः कुब्जः वृद्धः च तेषां पृष्ठतः आगतवन्तौ। 'महामृगस्य शवं स्थापयित्वा कुत्र वा स्मारकमन्दिरं निर्मातव्यम्?' इति विषये तयोः मध्ये प्रचलन्तीं चर्चां विनोदः अपि श्रुतवान्।

मध्यरात्रे अतीते अपि कारागृहे बद्धस्य विनोदस्य निद्रा एव नास्ति। 'मया तु सः क्रूरः मृगः मारितः। एतेन महाराजस्य कुब्जवृद्धस्य वा किमर्थं खेदः? वस्तुतः तु मया युवराजः अपायात् रक्षितः। प्रतिफलरूपेण मम सम्माननं करणीयम् आसीत्। किमर्थं ते मां कारागारे स्थापितवन्तः? किमर्थम् एवं विपरीततया प्रवर्तते?' इति बहुधा आलोचितवान् विनोदः।

किञ्चित्कालानन्तरं कारागारस्य द्वारम् अकस्मात् उद्घाटितम्। अङ्गरक्षकैः रहितः महाराजः अन्तः प्रविश्य विनोदस्य समीपम् आगतवान्।

विनोदं पश्यन् महाराजः उक्तवान्- "युवक! भवता मम पुत्रः यत् रक्षितः तदर्थम् अहं कृतज्ञः अस्मि। भवतः मरणम् अहं न इच्छामि" इति।

"भवान् मयि करुणां यत् प्रदर्शितवान् तदर्थम् अहम् अपि कृतज्ञः अस्मि। विना कारणं कस्यापि मरणं कोऽपि न इच्छति इति तु सहजम् एव" इति उक्तवान् विनोदः।

"एषा ज्ञानभूमिः इति भवान् जानाति खलु? ज्ञानार्जनार्थं क्रमप्राप्तं शिक्षणम् अत्यावश्यकम्। क्रमशिक्षणस्य सः मृगः अधिदेवता। तं वयं पवित्रमृगरूपेण भावयामः। सः मृगः प्रतिदिनम् एकैकं मानवं खादति। तस्य बुभुक्षानिवारणं यथा भवेत् तथा व्यवस्थापनम् अस्माकं कर्तव्यम्। राजा अपि मया नियमपालनं करणीयम् एव खलु।

नियमस्य पुरतः सर्वे समानाः।" इति उक्तवान् महाराजः।

"यस्य मृगस्य मुखात् अग्निज्वाला निस्सरति तादृशः क्रूरः मृगः क्रमशिक्षणस्य अधिदेवता वा?" इति पृष्टवान् विनोदः।

"वस्तुतः अत्र किञ्चित् रहस्यम् अस्ति। भवान् मम पुत्रं रक्षितवान् इत्यतः सर्वं यथावत् निवेदयामि। एषः महामृगः कश्चन क्रूरः पशुः इति तु सत्यम् एव। अधिदेवताविषयकं भयम् अस्ति चेत् एव सामान्याः पौराः क्रमशिक्षणं भयेन भक्त्या च प्राप्नुयुः। अधिदेवतायाः स्वरूपे यावती भीकरता भवति तावता एव प्रमाणेन शिक्षणस्य परिणामकारिता अपि वर्धते" इति उक्तवान् महाराजः।

"महाराज! रथवहनार्थम् अश्वस्य स्थाने मानवाः नियोजनीयाः इति भवतां विशेषज्ञानं बोधयति वा?" इनि अन्यं प्रश्नं पृष्टवान् विनोदः।

राजा विनोदस्य स्कन्धे हस्तं स्थापयन् उक्तवान्- "भोः! रथवाहकरूपेण स्थितौ वस्तुतः अपि न मानवौ। तौ अश्वौ एव। आवां तौ मानवरूपेण परिवर्तितवन्तौ। आवश्यकतायां सत्यां मानवान् अश्वरूपेण परिवर्तयितुम् अपि वयं समर्थाः। एतेन भवान् अस्माकं विज्ञानशक्तेः सामान्यं परिचयं प्राप्तवान् स्यात् इति अहं विश्वसिमि" इति।

"सर्वं ज्ञातं महाराज!" इति हसन् उक्तवान् विनोदः।



"सर्वं नाम किं किं ज्ञातम्?" इति सन्देहेन प्रश्नं कृतवान् महाराजः।

"निरुपयुक्ते विषये भवतां ज्ञानपिपासा! तस्याः च अधिदेवता क्रूरः राक्षसमृगः! युक्तः सङ्गमः! भवतां क्रमशिक्षणम् अपूर्वम्!" इति उक्तवान् विनोदः।

राजा क्षणकालं मौनम् आसीत्। अनन्तरं सः विनोदम् उक्तवान्- "ज्ञानभूमौ अस्माभिः साधितायाः प्रगतेः परिचयं प्राप्तुम् इच्छति चेत् मया सह आगच्छतु" इति। विनोदः एतदर्थं सिद्धः जातः। तौ ततः प्रस्थितवन्तौ।

वक्रेण सोपानमार्गेण गच्छन्तौ तौ राजभवनस्य एकं प्राङ्गणं प्राप्तवन्तौ। तत्र कोणे गोलाकारकं किञ्चन वस्तु आसीत्।



स्म। तैः किं क्रियमाणम् अस्ति इति विनोदेन न ज्ञातम्।

"एते किं कुर्वन्तः सन्ति महाराज?" इति आश्चर्येण पृष्टवान् विनोदः।

"ते तु विभिन्नेषु कार्येषु मग्नाः सन्ति। अस्माकं बह्व्यः योजनाः सन्ति। तत्र पश्यतु! ते गणितज्ञाः। अस्माकं देशे स्थितानां सिकतानां निष्कृष्टां सङ्ख्यां ज्ञातुं ते सूत्रस्य अन्वेषणं कुर्वन्तः सन्ति" इति विवरणं दत्तवान् राजा।

"तादृशस्य सूत्रस्य प्राप्त्या किं वा प्रयोजनं महाराज?" इति पृष्टवान् विनोदः।

"किं प्रयोजनम् इति? ज्ञानस्य प्राबल्यं भवान् किं वा जानाति? विज्ञानकारणतः अनूह्यानि बहूनि महत्प्रयोजनानि सिध्यन्ति। अतः एव वयं विज्ञानस्य विभिन्नशाखाभ्यः ज्ञानं सङ्गृह्य रक्षन्तः स्मः। तत्र दूरे कान्तिशिखरं पश्यति खलु? तदनन्तरं पश्यतु। तत्र महाविज्ञानिनः सर्वे सम्भूय श्रद्धया अपूर्वस्य विषयस्य संशोधने मग्नाः सन्ति। तैः क्रियमाणं संशोधनं सर्वसंशोधनेषु मुकुटायते" इति साभिमानम् उक्तवान् महाराजः।

"तादृशम् अपूर्वं संशोधनं कस्मिन् विषये प्रचलति महाराज?" इति पुनरपि कुतूहलेन पृष्टवान् विनोदः।

"इतः एव नक्षत्राणां भेदनम् नाशनं च यथा शक्येत तथा करणीयम् इति अस्माकं

तस्य मध्यभागे रक्तवर्णीयं फलकसदृशम् अन्यत् आसीत्। राजा हस्तेन तत् त्रिवारं ताडितवान्। तदा रक्तवर्णीयं फलकम् अदृश्यतां गतम्। तत्र द्वारं दृश्यते स्म।

राजा अन्तः प्रविशन्- "एतस्य गोलाकारस्य वस्तुतः वैशिष्ट्यं यत् ज्ञानभूमौ यद्यत् प्रवर्तते तत्सर्वम् इतः प्रत्यक्षं द्रष्टुं शक्यते। वचनानि च सुस्पष्टं श्रूयन्ते। समीपे एव सर्वं प्रचलति इव भासते। तत्र पश्यतु भवान्" इति उक्त्वा भित्तौ दर्पणसदृशं प्रदेशं प्रदर्शितवान्।

विनोदः तत्र दृष्टिं प्रसारितवान्। विविधेषु भागेषु विभक्ता नगरी तेन दृष्टा। तस्मिन् मध्यरात्रे अपि जनाः कार्यनिरताः दृश्यन्ते

विचारः। तादृशस्य तन्त्रस्य अन्वेषणे सन्ति ते विज्ञानिनः" इति उत्साहेन उक्तवान् महाराजः।

"कीदृशी मूर्खता एषा! क्रौर्यस्य परमावधिः!" इति उद्गारः अप्रयत्नेन विनोदस्य मुखात् निर्गतः।

"कीदृशम् औद्धत्यं भवतः?" इति असमाधानेन पृष्टवान् महाराजः।

"औद्धत्यं मम, उत भवताम्? सुदूरे स्थितेन तेन वराकेण नक्षत्रेण किं वा अपराद्धम्? किमर्थं तस्य ध्वंसार्थं प्रयत्नः?" इति पृष्टवान् विनोदः।



राजा शान्तेन स्वरेण उक्तवान्- "भवान् यथा चिन्तयति तथा तानि नक्षत्राणि न सामान्यानि। एकैकं नक्षत्रम् अपि भूमेः अपेक्षया विशालम्। अत्र अस्मदपेक्षया समर्थाः अपि वसेयुः खलु? यदा कदापि ते भूमेः उपरि आक्रमणं कर्तुम् अर्हन्ति। तादृशे सन्दर्भे अस्माकं रक्षणं कथम्? तदर्थम् एषः उद्यमः। अत्र किं दोषं पश्यति भवान्?" इति।

"महाराज! असम्भाव्यं किमपि किमपि चिन्तयन्तः भवन्तः वृथा अस्थाने शक्तेः व्ययं कुर्वन्तः सन्ति। यथा भवान् वदति तथैव नक्षत्रलोकात् जनाः आगच्छेयुः इत्येव चिन्तयेम। ते स्नेहम् इच्छन्तः एव आगच्छन्ति इति कुतो वा न चिन्तनीयम्? भवतां संशोधनस्य मूलं कारणं भयम् एव। किमर्थं तादृशं भयं भवतां मनसि प्रविष्टम्? काऽपि घटना प्रवृत्ता वा?" इति पृष्टवान् विनोदः।

"घटनां विना अपि भयं भवितुम् अर्हति खलु? वस्तुतः भयम् एव मानवान् एकत्रीकरोति। अतः वयं भयं कल्पयामः" इति उत्तरं दत्तवान् महाराजः।

"अदृष्टानां नक्षत्रलोकवासिनाम् आक्रमणम् एव असम्भवम्। तन्निमित्तीकृत्य जनेषु भयस्य उत्पादनम्। तत्कारणतः सङ्घटनं करणीयम् इति विचारः। अपूर्वा बुद्धिशक्तिः भवताम्! तदस्तु तावत्, एते जनाः मध्यरात्रे अपि किमर्थं निद्रां कुर्वन्तः न सन्ति?" इति पृष्टवान् विनोदः।

"निद्रा? निद्रानिवारणार्थम् अस्माभिः उपायः अन्विष्टः अस्ति। यः दशवर्षपर्यन्तं

निद्रां विना तिष्ठति तस्मै महामृगप्रशस्तिः दीयते अपि" इति राजा साभिमानम् उक्तवान्।

"निद्रां विना आरोग्यस्य का वा गतिः?" इति आश्चर्येण पृष्टवान् विनोदः।

"निद्राभावकारणतः आरोग्यहानिः यथा न भवेत् तथा कर्तुं मार्गः अपि अन्विष्टः अस्ति अस्माभिः" इति उक्तत्वा अपरम् एकं प्रदेशं विनोदाय प्रदर्श्य- "तत्र मण्डपप्रदेशं पश्यतु। तत्र अस्माकम् अर्चकः तेषु आरोग्यपूरणार्थं विशेषव्यवस्थां कृतवान् अस्ति, पश्यतु" इति उक्तवान्।

तत्र दृष्टिं प्रसारितवान् विनोदः। विशालस्य मण्डपस्य मध्ये भित्तौ महामृगस्य चित्रं बृहदाकारेण लिखितम् आसीत्। मण्डपस्य अन्तः बहवः जनाः आसन्। सर्वेषां मुखेषु क्लान्तेः चिन्तायाश्च छाया। शिरः अवनमय्य ते तत्र तत्र उपविष्टाः सन्ति। अर्चकः उन्नतां वेदिकाम् आरुह्य वदन् अस्ति- "परमपूजनीयं, समर्थस्य ज्ञानस्य प्रतीकं तं पवित्रं महामृगं मारितवतः पुरुषस्य वार्ता भवद्भिः श्रुता एव खलु? ज्ञानभूमौ अक्रमप्रवेशः, समर्थस्य महामृगस्य मारणम् इत्यादिकं सामान्येन केनचित् कर्तुं न शक्यते एव। सः मानवाकारेण स्थितः राक्षसः एव इत्यत्र न कोऽपि सन्देहः। अस्माकं शत्रुणा केनचित् सः प्रेरितः, अत्र प्रेषितः च। एषः पुरुषः महाचतुरः अपि। यदा महामृगः युवराजं खादितुम् उद्युक्तः अभवत् तदा एव गत्वा मृगं मारितवान्। एतद्द्वारा महाराजस्य अनुकम्पः सम्पादनीयः इति तस्य इच्छा आसीत्। किन्तु वयं तु तं निर्दयं बद्ध्वा कारागारे स्थापितवन्तः" इति।

"सः असत्यवादी यत् जल्पति तत्र भवान् अपि विश्वसिति वा महाराज?" इति पृष्टवान् विनोदः। तस्य प्रश्ने कोपः स्फुटं दृश्यते स्म।

महाराजः तु तत्क्षणे किमपि उत्तरम् अयच्छन् संशयदृष्ट्या विनोदम् एव पश्यन् आसीत्।

(अनुवर्तते)





# वचनभङ्गः

सदा शववहनभारम् एव इच्छन् इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। ततः मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्- "अये राजन्! सामर्थ्यबाह्यं कार्यं कदापि न अङ्गीकरणीयम्। कदाचित् वयम् अविचिन्त्य किमपि कार्यम् अङ्गीकुर्मः। अनन्तरं दत्तं वचनं तिरस्कर्तुम् अशक्ताः क्लेशम् अनुभवामः। भवान् अपि एवम् एव कुर्वन् अस्ति इति मम अभिप्रायः। पूर्वं प्रचण्डो नाम राक्षसराजः महाराजस्य साहाय्यं प्रतिज्ञातवान्। किन्तु अनन्तरं वचनभङ्गं कृत्वा उपहासपात्रम् अभवत्। तत् कथम् इति ज्ञातुं भवतः कुतूहलं स्यात् एव। कथाश्रवणेन कुतूहलं शान्तं भवेत्, मार्गायासः अपि परिहृतः भवेत्। श्रद्धया कथां

वेतालकथा



शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा-

माधवसेनः मगधदेशस्य राजा आसीत्। सः तदा तदा वेषपरिवर्तनं कृत्वा देशे सञ्चरति। कदाचित् एवं देशसञ्चारसन्दर्भे मध्यरात्रसमये तेन एकं विचित्रं दृश्यं दृष्टम्।

एकस्य वृक्षस्य अधः कश्चन महामूषकः सुप्तः आसीत्। शुनकेन अनुधाव्यमानः कश्चन मार्जारः तत्र आगतः। महामूषकं दृष्ट्वा पुनरपि भीतः सः ततः अधावत्। एतत् दृश्यं दृष्टवतः महाराजस्य महत् आश्चर्यम्।

'किम् एतत्! मूषकाः तावत् प्रबलाः जाताः यत् ते मार्जारम् एव भाययन्ति! सुप्तः मूषकः एव एवं भीकरः चेत् जागरितः सः कीदृशः स्यात्! एतादृशः न जीवेत्' इति आलोच्य माधवसेनः स्वकोषात् खड्गम् आकृष्य स्थितवान्।

तदा अपरा एव आश्चर्यकरी घटना प्रवृत्ता। महामूषकः मानवाकारेण अतिष्ठत्।

आश्चर्यचकितः महाराजः तं पुरुषं पृष्टवान्- "कः भवान्? किमर्थं मूषकरूपेण अत्र स्थितवान्? भवतः नैजं रूपं किम्? किं कुलं भवतः?" इति।

"अहं राक्षसराजः प्रचण्डः। विशेषकार्यनिमित्तम् अहं भूलोकम् आगतवान्। मम भीकराकारं दृष्ट्वा जनाः भीताः भवेयुः इति कृत्वा मानववेषेण सञ्चरामि। एतादृशे प्रदेशे निद्रासमये मानवानां यः प्राणापायः तादृशः प्राणापायः पशूनां न भवति। अतः एवं मूषकरूपेण सुप्तवान्। मम उपरि खड्गप्रयोगार्थम् उद्युक्तः भवान् कः?" इति पृष्टवान् सः पुरुषः।

तदा पुनरपि आश्चर्यम् अनुभवन् माधवसेनः- "मानवानां प्राणापायः कीदृशः? किमर्थं तेषां रक्षणं न भवति? भवतः वचने कोऽपि गूढार्थः अस्ति इति भाति। मया दृष्टः इत्यतः भवान् जीवति। अन्यथा प्राणैः विमुक्तेन भवितव्यम् आसीत् भवता" इति उक्त्वा आत्मनः परिचयं निवेदितवान्।

माधवसेनस्य वचनं श्रुत्वा राक्षसः प्रचण्डः- "राक्षसानाम् अस्माकं जीवने कश्चन नियमः अस्ति। यदा वयं

मानवरूपधारिणः भवामः तदा राक्षसबलं न भवति अस्माकम्। मानवानां यावती शक्तिः तावती एव शक्तिः अस्माकम् अपि। पशुवेषेण यदा तिष्ठामः तदा तु कुतश्चित् अपि अस्माकम् अपायः न भवति। अतः एव अहं मूषकरूपं धृतवान्। तदस्तु तावत्, भवान् तु साक्षात् महाराजः। अयाचितं भवतः दर्शनं प्राप्तं मया। मानवराजम् एषः राक्षसराजः अहं नमस्करोमि'' इति उक्त्वा नमस्कृतवान्।



''राक्षसानां राजा भवान् अन्यं राक्षसम् अप्रेषयन् किमर्थं स्वयम् अत्र आगतवान्?'' इति पृष्टवान् माधवसेनः।

''वयं यद्यपि राक्षसकुलोत्पन्नाः, तथापि अस्माकं केचन कठोराः नियमाः सन्ति एव। नरभक्षणं राक्षसानां निषिद्धं न। तथापि तैः आहारार्थं स्वयं मनुष्याः न मारणीयाः। आत्मरक्षणार्थं चेदपि मनुष्यमारणं निषिद्धम् एव। आहारार्थम् अन्यैः प्राणिभिः मारितस्य मनुष्यस्य खादनम् अपि निषिद्धम्। एवं स्थिते मया श्रुतं यत् केचन राक्षसाः नियमम् उल्लङ्घ्य भूलोके मनुष्यान् मारयित्वा खादन्तः सन्ति इति। एवं चौर्येण कृतं नरभक्षणम् अपराधाय एव खलु?'' इति उक्तवान् राक्षसः प्रचण्डः।

''राक्षसाः अत्र आगत्य कथं वा नियमविरुद्धं नरभक्षणं कृतवन्तः? कथं वा तत् भवता ज्ञातम्?'' इति पृष्टवान् राजा माधवसेनः।

''तदेव वक्तुम् अहम् उद्युक्तः। ते वदन्ति यत् अस्माभिः नियमोल्लङ्घनं न कृतम् इति। 'भूलोके जातिव्याजेन मतव्याजेन च लुण्ठन-प्रतारणादिकं प्रचलति। परस्परं मारणम् अपि प्रचलति। तथा मृतान् एव वयं खादितवन्तः' इति वदन्ति ते। तेषां वचनस्य सत्यतां परीक्षितुम् एव अहं भूलोकम् आगतवान्। आपाततः तेषां वचनं सत्यम् इति ज्ञातम्। सुस्पष्टं ज्ञातुम् इच्छन् केभ्यश्चित् दिनेभ्यः अत्रैव वसतिं कृतवान्। इदानीं तु सर्वं सुस्पष्टम् एव'' इति उक्तवान् राक्षसः प्रचण्डः।

''मानवेषु परस्परमारणं यत् प्रचलति तस्य कारणम् अपि ज्ञातम् एव स्यात् खलु



भवता?" इति कुतूहलेन पृष्टवान् माधवसेनः।

"भूलोकस्य राजसु राक्षसांशाः सन्ति। अतः एव तेषां प्रजाः क्रूराः असमर्थाः असूयायुक्ताः च जाताः। तृष्णायुताः ते जनाः शक्तिहीनाः इत्यतः वञ्चनादिकम् आश्रित्य जीवन्ति। अतः एव कलहादिकं नित्यं प्रवर्तते तेषु" इति राक्षसः प्रचण्डः उक्तवान्।

'भूलोकस्य राजसु राक्षसांशाः सन्ति इत्यस्य अर्थः मयि अपि ते सन्ति इति खलु सिध्यति?' इति आलोचयतः माधवसेनस्य कोपः प्रवृद्धः।

'मां राक्षसांशयुतं चिन्तयति? तत् न इति इदानीम् एव प्रमाणीकरोमि। स्वार्थराहित्यं क्रूरताराहित्यं च एतत्क्षणे एव प्रमाणीकर्तुं कष्टम् अस्ति। किन्तु शक्तिमत्त्वं तु एतत्क्षणे प्रमाणयितुं शक्यते। भवान् निजरूपेण तिष्ठतु। भवन्तं पराजित्य मम शौर्यं प्रदर्शयिष्यामि" इति उक्तवान् माधवसेनः।

"राक्षसरूपेण स्थितं मां पराजेतुं कोऽपि न शक्नोति। यतः तत्सन्दर्भे मयि विशिष्टाः शक्तयः आविशन्ति। तेन रूपेण भवता सह युद्धम् अन्याय्यं भवेत्। यदि भवतः धैर्यं स्यात् तर्हि मानवरूपेण स्थितेन मया सह एव युद्धं कर्तुम् अर्हति" इति उक्तवान् प्रचण्डः।

एतत् निराकुर्वन् माधवसेनः उक्तवान्- "अहम् एतस्य मगधदेशस्य राजा। विना कारणं कस्यापि मानवस्य उपरि खड्गं प्रयोक्तुम् अहं न शक्नोमि। खड्गप्रयोगं विना मम शक्तेः प्रमाणीकरणम् अपि असाध्यम् एव। अतः एव अहं भवन्तं राक्षसरूपं धर्तुम् उक्तवान्। किं वा कारणम् आधारीकृत्य मावनरूपिणा भवता सह युद्धं कुर्याम्?" इति।

"मानवः मानवं यदा मारयति तदा एव खलु राक्षसाः नरभक्षणस्य अवकाशं प्राप्नुवन्ति? तादृशः अवकाशः पुनः पुनः भवतु इति उद्देशेन अहं भूलोकं तदा तदा आगत्य कलहबीजम् आरोप्य गच्छन् अस्मि इति चिन्तयतु। तथा करणं तु भवतः दृष्ट्या अपराधः खलु? अपराधिनः दण्डनं महाराजस्य कर्तव्यम्। एतस्य आधारेण भवान् मां शत्रुं भावयित्वा मया सह युद्धं

कर्तुम् अर्हति। युद्धे भवान् यदि जयं प्राप्नुयात् तर्हि भवता यथा सूच्यते तथा आचरामि" इति उक्तवान् राक्षसः।

"तर्हि पश्यतु मम खड्गप्रहारकौशलम्" इति उक्त्वा माधवसेनः युद्धार्थं सिद्धः जातः।

राक्षसः प्रचण्डः अपि हस्ते खड्गं स्वीकृत्य युद्धार्थं सिद्धः जातः। तयोः मध्ये घोरं युद्धं प्रवृत्तम्। अल्पे एव काले प्रचण्डस्य हस्ते स्थितः खड्गः भूमौ पतितः। एवं खड्गयुद्धं समाप्तम्।

अनन्तरं तयोः मध्ये बाहुयुद्धम् आरब्धम्। यद्यपि राक्षसः प्रचण्डः माधवसेनस्य अपेक्षया बलवान् तथापि माधवसेनस्य तन्त्रं सम्मुखीकर्तुं सः न शक्तवान्। तन्त्रविशेषेण माधवसेनः प्रचण्डम् उन्नीय भ्रामयित्वा उत्तानरूपेण अधः पातितवान्। पतनकारणतः राक्षसः मूर्च्छां गतः इव।

क्षणकालानन्तरं प्रचण्डः आत्मनः समतोलनं प्राप्य उत्थाय- "भवतः युक्तिसहिता शक्तिः तु अपूर्वा एव। भवान् यत् इच्छति तत् पृच्छतु। दास्यामि, आचरामि वा" इति उक्त्वा भयङ्करं राक्षसरूपं धृत्वा स्थितवान्।

"राक्षसेन्द्र! भवान् मम साहाय्यं कर्तुम् इच्छति खलु? तर्हि युद्धे भवतः साहाय्यम् इच्छामि अहम्। समग्रस्य भूमण्डलस्य एकचक्राधिपतिः सन् अहं शान्तिं स्थापयिष्यामि। भवतः साहाय्यं कृतज्ञतापूर्वकं स्मरिष्यामि च" इति उक्तवान् माधवसेनः।



तत् श्रुत्वा विकटाट्टहासं कुर्वन् राक्षसः- "राजन्! साहाय्यं करोमि इति मया यद्यपि उक्तं तथापि भवता प्रार्थितं साहाय्यं निराकुर्वन् अस्मि। क्षाम्यतु माम्। मम साहाय्यं प्राप्तुं भवतः योग्यता एव नास्ति। भवतः स्वार्थभावना वस्तुतः अपि अपायकारिणी एव। भवतः शक्तिः अस्ति, सत्यम्। किन्तु विवेकः तु सर्वथा नास्ति" इति उक्त्वा झटिति ततः अदृश्यतां गतवान्।

वेतालः एवं कथां समाप्य अवदत्- "अये राजन्! राक्षसराजः दत्तस्य वचनस्य पालनं किमर्थं न कृतवान्? समग्रस्य प्रपञ्चस्य उपरि माधवसेनस्य एव शासनं यदि भवेत् तर्हि स्वस्य अनुचराः नरमांसभक्षणं कर्तुं न शक्नुवन्ति इति सः आलोचितवान् वा? स्वयं वचनभङ्गं कृतवान् राक्षसः महाराजं वदति- भवतः शक्तिः केवला अस्ति, न तु विवेकः इति। एवं कथयतः तस्य कः आशयः? एतेषां सर्वेषां समाधानं भवान् जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्- "राक्षसराजः मूषकवेषेण सुप्तः आसीत्। 'मानवरूपेण स्थितिः अपायकरी' इति तस्य आशयः। एतेन ज्ञायते यत् माधवसेनस्य राज्ये प्रजानां योग्यं रक्षणं न आसीत् इति। माधवसेनस्य शासने लोपः अस्ति इति तु एतेन सिद्धम्। यः स्वराज्ये स्थिताम् अराजकतां निर्मूलयितुं न शक्नोति सः समग्रे प्रपञ्चे शान्तिं कथं वा स्थापयेत्? अतः एव राक्षसराजः साहाय्यं निराकृतवान्। साहाय्यकरणेन राक्षसाः नरमांसं न प्राप्नुयुः इति चिन्तनम् अनुचितम् एव। युद्धे सैनिकानां मरणं सहजम्। तेन लाभः राक्षसानाम् एव। स्वशासनस्य दोषं ज्ञातुं न शक्नोति माधवसेनः। अतः तं विवेकहीनम् उक्त्वा राक्षसः अदृश्यः अभवत्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।





# स्मरणशक्तिः

रत्नपुरस्य भूस्वामिनः कार्यालये बहवः लिपिकाराः, इतरोद्योगिनः च आसन्। किन्तु, कुत्र किं प्रवर्तते इति परिशील्य योग्यं निर्णयं स्वीकर्तुं, करणीयं कार्यं निर्देष्टुं च समर्थः कोऽपि तत्र न आसीत्।

एषा न्यूनता पूरणीया इति निश्चितवान् भूस्वामी। सूक्ष्मबुद्धिः कश्चित् साहाय्यकर्त्वेन स्वीकरणीयः इति तस्य विचारः।

एषा वार्ता यदा प्रकटिता तदा पञ्चषाः आत्मनः योग्यतां निवेद्य आवेदनपत्रं प्रेषितवन्तः। भूस्वामिना सूचिते दिने ते सर्वे युवकाः भूस्वामिनः गृहे उपस्थितवन्तः।

तान् दृष्ट्वा भूस्वामी— "ललितकलासु काव्येषु च मम विशेषरुचिः इति प्रायः भवन्तः जानन्ति एव। इतरैः लिखितस्य काव्यस्य आस्वादनेन सहैव स्वयं काव्यरचनायाम् अपि मम विशेषरुचिः। अद्य मया भावपूर्णम् एकं गीतं रचितम्। प्रथमं तत् शृण्वन्तु" इति उक्त्वा षट्चरणयुतम् एकं गीतं श्रावितवान्।

युवकाः तत् गीतं मौनं श्रुतवन्तः।

भूस्वामी पुनः उक्तवान्— "इदानीं पुनरपि गीतलेखने मम मनः उत्सहते। भावकालुष्यं यथा न भवेत् तथा इदानीम् एकान्ते स्थातुम् इच्छामि अहम्। अतः अद्य भवन्तः गच्छन्तु। पुनरपि शुक्रवासरे मां पश्यन्तु" इति।

युवकाः भूस्वामिनः सूचनानुसारं ततः गतवन्तः। शुक्रवासरे पुनः आगत्य भूस्वामिना मिलितवन्तः च। तदा भूस्वामी तान् पृष्टवान्— "परह्यः भवन्तः मम मुखात् एकं गीतं श्रुतवन्तः खलु? तत् गीतं यत्र लिखितम् आसीत् तत् पत्रं कुत्रापि नष्टम् अभवत्। भवत्सु कोऽपि तत् गीतम् स्मरति

वा?" इति।

सर्वे युवकाः परस्पर मुखं दृष्टवन्तः। तदा रामकीर्तिः नाम युवकः उत्थाय– "श्रीमन्! तत् गीतम् अहं सम्यक् स्मरामि। वदामि, शृणोतु" इति उक्त्वा गीतम् आद्यन्तं श्रावितवान्।

रामकीर्तेः स्मरणशक्तिं दृष्ट्वा सर्वे आश्चर्यचकिताः अभवन्।

भूस्वामी सन्तोषं प्रकटयन् उक्तवान्– "रामकीर्ते! भवतः स्मरणशक्तिः अपूर्वा अस्ति। सकृत् एव श्रुत्वा भवान् मया लिखित गीतं यथालिखितं श्रावितवान्" इति।

तदा रामकीर्तिः विनयेन उक्तवान्– "श्रीमन्! भवान् अन्यथा यदि न चिन्तयेत् तर्हि मया किञ्चित् वक्तव्यम् अस्ति" इति।

"किं तत्? निस्सङ्कोचं वदतु" इति उक्तवान् भूस्वामी।

"एतत् गीतं भवता लिखितं न, श्रीमन्!" इति उक्तवान् रामकीर्तिः।

"तर्हि केन अन्येन लिखितम्? तद्वा वदतु" इति असमाधानेन इव उक्तवान् भूस्वामी।

"एतत् गीतं मया मम पितामह्याः मुखतः श्रुतम्। यदा अहं पञ्चवर्षीयः आसं तदा सा मां पाठितवती आसीत्" इति उक्तवान् रामकीर्तिः।

तदा भूस्वामी हसन् उक्तवान्– "भवता उक्तं सत्यम् एव। वस्तुतः अपि एतत् गीतं मया न लिखितम्। उद्योगार्थम् आगतानां भवतां स्मरणशक्तेः परीक्षणार्थं मया एषा परीक्षा आयोजिता। विशेषस्मरणशक्तियुतम् एव अहं साहाय्यकत्वेन स्वीकर्तुम् इच्छामि। भवतः स्मरणशक्त्या अहं सन्तुष्टः अस्मि। अन्यच्च वस्तुस्थितिं निदाक्षिण्यं, किन्तु सविनयं निवेदयितुम् अपि भवान् समर्थः। यः मुखस्तुतौ आसक्तिं प्रदर्शयति तादृशः मह्यं न अपेक्षितः। भवतः स्मरणशक्तिः, अप्रियस्य अपि सत्यस्य विनयेन कथनम्, मुखस्तुतौ अनासक्तिः इत्यादिभिः अहं नितरां सन्तुष्टः। भवन्तम् एव साहाय्यकपदे नियोक्ष्यामि" इति।



काव्यकथा -

# शकुन्तला-१



कदाचित् कण्वमहर्षिः आश्रमं प्रत्यागच्छन् पक्षिभिः पाल्यमानम् एकं शिशुं दृष्टवान्। सः आश्चर्यम् अनुभवन् शिशुम् उन्नीय आश्रमम् आनीय प्रीत्या पालितवान्। तस्य शिशोः नाम शकुन्तला इति निश्चितम्। मेनका-विश्वामित्रयोः अपत्यम् आसीत् तत्। ताभ्यां निराकृतं तत् अपत्यं कण्वाश्रमे शकुन्तलानाम्ना सुखेन अवर्धत।



हस्तिनापुरस्य महाराजः दुष्यन्तः कदाचित् मृगयार्थम् अरण्यम् आगतवान्। अरण्ये समीपे एव कण्वाश्रमं दृष्ट्वा, मुनिदर्शनं प्राप्तुम् इच्छन् अङ्गरक्षकादीन् दूरे स्थापयित्वा कण्वाश्रमं प्रति आगतवान्।

तत्समये कण्वमहर्षिः आश्रमे न आसीत्। तत्र मुनिकन्यकाभिः सह शकुन्तला विहरन्ती आसीत्। कश्चन भ्रमरः तां परितः भ्रमन् पीडयति स्म। शकुन्तला तस्य पीडां सखीः निवेदितवती। "वयम् एतं विषयं दुष्यन्तं निवेदयामः इति अजानन् एषः भ्रमरः एवं व्यवहरति" इति परिहासनेन उक्तवती काचित् सखी।





एवं संलापं शृण्वन् दुष्यन्तः तासां समीपं गतवान्। महाराजं दृष्टवतीनां तासाम् आश्चर्यस्य सीमा एव नास्ति! आश्रमे कण्वः नास्ति इत्यतः ताः एव महाराजस्य सत्कारं कृतवत्यः।

भक्त्या गौरवेण ताः फलानि समर्पितवत्यः। 'किञ्चित् विश्रान्तिसुखम् अनुभवतु' इति प्रार्थितवत्यः च। शकुन्तलायाः रूपं लावण्यं नयविनयं च दृष्ट्वा राजा अतीव सन्तुष्टः।





वार्तालापसन्दर्भे महाराजेन ज्ञातं यत् केचन वन्यमृगाः आश्रमप्रदेशे पीडां जनयन्तः सन्ति इति। सः मदगजान् वन्यमहिषान् च ततः सुदूरं प्रेषितवान्। मृगयायासपरिश्रान्तस्य महाराजस्य परिचर्यां महत्या श्रद्धया कृतवती शकुन्तला।

अल्पेषु एव दिनेषु शकुन्तला-दुष्यन्तयोः मनसि अनुरागः उत्पन्नः। पितृतुल्यस्य कण्वस्य अनुपस्थितौ विवाहं निराकृतवती शकुन्तला। तथापि दुष्यन्तस्य अभयदानेन नयवचनैः च अन्ते सा अनुमतिं दत्तवती। गान्धर्वविधिना तयोः विवाहः सम्पन्नः। धर्मस्वरूपी दुष्यन्तः शकुन्तलां परिणीतवान् इति मुनिकन्यकाः अपि सन्तुष्टाः।





राजकार्यार्थं दुष्यन्तेन राजधानीं प्रतिगन्तव्यम् आपतितम्। 'कण्वस्य प्रत्यागमनानन्तरं तस्य आशीर्वादं प्राप्य एव भवतीं राजधानीं प्रति नेष्यामि' इति वचनं दत्त्वा, मुद्राङ्गुलीयकं तस्याः अङ्गुल्यां स्थापयित्वा आश्रमात् प्रस्थितवान् दुष्यन्तः।

दुष्यन्तः आश्रमवासिनाम् अपि अनुमतिं प्राप्तवान्। शकुन्तला भारभूतहृदया एव अनुमतिं दत्तवती। दुष्यन्तः तु शकुन्तलावियोगम् अनिच्छन् अपि अनिवार्यतया ततः निर्गतवान्।





केषाञ्चित् दिनानाम् अनन्तरं कण्वः आश्रमं प्रत्यागतवान्। शकुन्तला भीता एव कण्वस्य पादौ नमस्कृतवती। 'आत्मना कृतस्य दुष्यन्तपरिणयस्य विषये किं वदेत्?' इति तस्याः आतङ्कः।

—(अनुवर्तते)



# त्रीणि सूत्राणि

**ता**ण्डवाचार्यस्य गुरुकुले कश्चन निर्धनः विद्यार्थी आसीत्। इतरान् विद्यार्थिनः इव एतं निर्धनं बालकम् अपि प्रीत्या एव पाठयति आचार्यः।

आचार्यस्य व्यवहारे कदापि तारतम्यं न भवति। तथापि निर्धनः बालकः विद्यावान् न जातः। एतत् स्मृत्वा ताण्डवाचार्यः सदा खेदम् अनुभवति। एकदा ताण्डवाचार्यः शिष्यं स्वसमीपम् आहूय उक्तवान् - "भवतः सहपाठिनः सर्वे पण्डिताः जाताः। भवतः दुरदृष्टात् वा मम असामर्थ्यात् वा भवान् तु विद्यां सम्पादयितुं न शक्तवान्। तथापि शिष्यवात्सल्येन त्रीणि सूत्राणि पाठयामि। यदि अदृष्टबलं स्यात् तर्हि भवान् ततः उन्नतिं प्राप्नुयात्" इति।

अनन्तरं ताण्डवाचार्यः अधस्तनानि त्रीणि सूत्राणि बोधितवान् -

प्रथमसूत्रम् - निरन्तरगमनेन प्राप्तव्यं स्वयं प्राप्यते।

द्वितीयसूत्रम् - पुनः पुनः श्रवणेन सर्वं ज्ञायते।

तृतीयसूत्रम् - जागरूकस्य मरणभयं न भवति।

एतानि त्रीणि सूत्राणि पुनः पुनः वदन् कण्ठस्थीकुर्वन् शिष्यः गुरुकुलात् निर्गतवान्।

शिष्यः निरन्तराध्ययने यद्यपि असमर्थः तथापि सः वार्तालापे अतीव चतुरः। द्वित्रैः वाक्यैः एव सः नूतनानाम् आत्मीयतां सम्पादयति। नूतनस्थलस्य दर्शने नूतनवार्तासङ्ग्रहणे च तस्य विशेषासक्तिः

मार्गे तस्य मनसि विचारः आगतः यत् वेदवतीनगरं द्रष्टव्यम् इति। अतः सः सम्मुखम् आगतान् जनान् मार्गं पृच्छन्

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



वेदवतीनगरं प्रति प्रस्थितवान्।

तत् नगरं कियद्दूरे अस्ति इति सः न जानाति। शकटेन गन्तुं तस्य समीपे धनं नास्ति। अतः गुरोः प्रथमं सूत्रं स्मरन् अहर्निशं गच्छन् मासत्रयानन्तरं वेदवतीनगरं प्राप्तवान्।

'गुरुणा उक्तं प्रथमं सूत्रं सार्थकं जातम्' इति आलोचितवान् सः शिष्यः। अतः गुरुवचने श्रद्धा अधिका जाता।

'वेदवतीनगरं तु सुविशालम्। अत्र उद्योगप्राप्तिः क्लेशाय न भवेत्। गृहगमनं परित्यज्य कन्दमूलफलादिकं खादन् अहं कथञ्चित् एतत् नगरं प्राप्तवान्। अतः उदरपूरणार्थं कमपि उद्योगं प्राप्य कानिचन दिनानि अत्र स्थितं चेदेव आगमनस्य सार्थक्यम्' इति आलोच्य सः शिष्यः इतस्ततः विचार्य लघुम् उद्योगम् एकं प्राप्तवान्।

'पुनः पुनः श्रवणेन सर्वं ज्ञायते' इति खलु द्वितीयं सूत्रम्। अतः सः शिष्यः 'नगरे कः विशेषः?' इति सम्मुखम् आगतान् सर्वान् पृष्टवान्। तेन एकः विषयः सुस्पष्टं ज्ञातः। तच्च–

एतस्य देशस्य शासनं राजा न करोति, अपि तु राज्ञी करोति। पञ्चषवारं विवाहः प्रवृत्तः चेदपि सा अनाघ्रातं पुष्पम् इव कन्यारूपेण एव अस्ति। यः तां परिणेष्यति सः प्रथमे दिने रात्रिसमये मरणं गच्छति स्म। एवं क्रमशः पञ्च षड् वा यदा मृताः तदा कोऽपि तां परिणेतुं सिद्धः जातः। सर्वे राजकुमाराः तस्याः नामश्रवणेन एव भीताः भवन्ति स्म।

इदानीं मन्त्रिणः चिन्ता आरब्धा। सः उद्घोषितवान् यत् यः राजकुमारीं परिणेष्यति स एव सिंहासनस्य उत्तराधिकारी भविष्यति इति।

निर्धनः शिष्यः अपि एतत् उद्घोषणं श्रुतवान्। गुरुणा उपदिष्टं तृतीयं सूत्रं - 'जागरूकस्य मरणभयं न भवति' इत्येतत् तस्य स्मरणे आगतम्। गुरोः वचने अपारं विश्वासं संस्थापयन् सः राजकुमारीं परिणेतुं निश्चितवान्।

अनन्तरदिने एव सः साक्षात् राजभवनं गत्वा मन्त्रिणं दृष्ट्वा- "अहं राजकुमारीं

परिणेतुं सिद्धः अस्मि" इति उक्तवान्।

सन्तुष्टः मन्त्री परिजनाः च सन्तोषेण विवाहमुहूर्तं निश्चित्य विवाहस्य सन्नाहम् आरब्धवन्तः।

राजोचितैः वेषभूषादिभिः सः शिष्यः अलङ्कृतः अभवत्। महता वैभवेन तयोः विवाहः सम्पन्नः अपि। अनन्तरदिने एव सिंहासनारोहणार्थम् अपि मुहूर्तः निश्चितः आसीत्।

तद्दिने रात्रौ तम् एकाकिनम् एव शय्यागृहे स्थापितवन्तः। एषः शय्यागृहं प्रविश्य वेषभूषादिकं निष्कास्य बहिः स्थापितं कदलीकाण्डम् आनीय पर्णादिकम् अपसार्य शय्यायां स्थापितवान्। आच्छादकैः तत् आच्छादितवान् च। प्रथमदर्शनेन तत्र मनुष्यः एव सुप्तः इति भासते स्म।

अनन्तरं खड्गं हस्ते गृहीत्वा स्तम्भस्य पृष्ठतः उपविष्टवान्।

'मारयितुं कोऽपि पिशाचः आगमिष्यति। सः निर्दयं मारणीयः' इति तस्य विचारः आसीत्। जागरूकतया सः सर्वत्र पश्यन् मौनम् उपविष्टवान्।

किञ्चित्कालानन्तरं उपरिष्टात् वस्त्राणाम् अन्तः स्थितः कश्चन सर्पः मन्दम् अधः आगच्छत्। शय्यायां स्थितं कदलीकाण्डं मनुष्यं मन्यमानः विषमयेन दन्तेन अदशत् च।

तत्क्षणे एव शिष्यः विद्युद्वेगेन अग्रे आगत्य तं सर्पं छिन्नविच्छिन्नं कृतवान्। मृतं सर्पं कदलीकाण्डं च बहिः क्षिप्त्वा शय्यायां सुखेन सुप्तवान्।

रात्रिः अपगता। वरः हसन् सकुशलं शय्यागृहतः बहिः आगतवान्। एतत् दृष्टवतां मन्त्रिप्रभृतीनां महान् सन्तोषः जातः। शत्रुणा केनचित् मन्त्रबलेन प्रेषितः सर्पः एतेन शिष्येण मारितः आसीत्।

मन्त्रिणः शिष्यस्य पट्टाभिषेकं कृतवन्तः। गुरुवचनेषु श्रद्धां स्थापयन् सः शिष्यः वेदवतीराज्यस्य राजा सन् चिरं सुखेन राज्यपालनं कृतवान्।



# उत्कोचः

श्रीनिवासपुरराज्यस्य राजा शूरसेनः शत्रुभ्यः राजधान्याः रक्षणार्थं राजधानीं परितः शिलाभिः उन्नतं दुर्गं निर्मितवान्। मुखद्वारम् अयसा सुदृढं कारितवान् च।

शिलानिर्मितायाः भित्तेः, अयोनिर्मितस्य द्वारस्य च दृढतायाः परीक्षणार्थं मदगजैः घट्टनं कारितम्। शतघ्नीभिः गोलिकास्त्रप्रयोगाः कारिताः। तथापि भित्तिद्वारादयः अखण्डिताः एव आसन्।

तदा राजा सगर्वं मन्त्रिसेनापतीन् उक्तवान्- "एषा भित्तिः, एतत् द्वारं च दुर्भेद्यम् अस्ति। इतःपरं शत्रवः अन्तः प्रवेष्टुं न अर्हन्ति। वयं तु शत्रुविषये निश्चिन्ताः भवितुम् अर्हामः" इति।

एतत् श्रुत्वा मन्त्री मनसि एव हसितवान्।

पुनः कदाचित् राजा मन्त्री च वेषान्तरं धृत्वा दुर्गपरिसरे सञ्चारं कृत्वा महाद्वारसमीपम् आगतवन्तौ। रक्षकभटप्रमुखम् अन्तः गन्तुम् अवकाशं प्रार्थितवन्तौ च।

सः रक्षकभटप्रमुखः निर्दाक्षिण्यम् उक्तवान्– "रात्रिसमये सेनापतेः अनुमतिपत्रं विना अन्तः गन्तुं बहिः निर्गन्तुं वा अवकाशः न दीयते" इति।

मन्त्री तं रक्षकभटप्रमुखं ततः किञ्चिद्दूरं नीत्वा "आवयोः नगरे त्वरया किञ्चित् कार्यम् अस्ति" इति उक्त्वा विंशतिं सुवर्णनाणकानि तस्य हस्ते स्थापितवान्।

सः रक्षकभटप्रमुखः प्रत्यागत्य द्वारस्य उद्घाटनार्थं भटान् आज्ञापितवान्।

आश्चर्यं प्राकटयन्तं राजानम् उक्तवान् मन्त्री- "प्रभो! दुर्गभित्त्यादयः यावद् वा दृढाः भवन्तु नाम, तथापि अत्र दृढता नास्ति चेत् सर्वं निष्फलं भवति" इति।






प्रजाभिः निवेदितं कुम्भकगोष्ठजातानां दृप्तवृषभाणाम् अकार्यं श्रुत्वा मिथिलाधिपतिः कुम्भकं स्वसमीपम् आहूय- "भवतः वृषभाः प्रतिदिनम् अपि अकार्याणि कुर्वन्तः सन्ति इति नागरिकाः निवेदयन्ति। तेषां निग्रहणं भवता कर्तव्यम्। भवतः तु धनबलं जनबलं च अस्ति एव। अतः एतत् कष्टाय न भवेत्। निग्रहणं सर्वथा न शक्तं चेत् ते अरण्यं प्रति वा प्रेषणीयाः" इति कठोरस्वरेण आदिष्टवान्।

"तथैव करिष्यामि महाप्रभो!" इति उक्त्वा कुम्भकः चिन्ताकुलः एव गृहं प्रत्यागतवान्। किन्तु कः उपायः आश्रयणीयः इति सः न जानाति। तेषां दृप्तवृषभाणां निग्रहणे उद्युक्ताः बहवः व्रणिताः, केचन मृताः च सन्ति इति वार्ता सर्वत्र प्रसृता अस्ति। अतः अनन्योपायः कुम्भकः उद्घोषितवान् यत् यः एतान् दृप्तवृषभान् निग्रहीष्यति तस्मै स्वपुत्री नीलादेवी दीयते इति।

एतां वार्तां श्रुत्वा बहुभ्यः देशेभ्यः बहवः वीराः शूराः च गोपयुवकाः वृषभैः सह युद्धार्थम् आगतवन्तः। 'गवां मध्ये सञ्चरतां वृषभाणां निग्रहणे को वा क्लेशः' इति तेषां विचारः आसीत्। परमसुन्दरी नीलादेवी परिणेतव्या इति आशा अपरत्र।

एवम् आगताः सर्वे वीराः इति तु सत्यम् एव। एते ग्रामे सञ्चरन्तः स्वप्रतापादिविषये सर्वत्र उद्घोषितवन्तः।

एकः वदति- "शृङ्गं सम्यक् गृहीतं चेत् तेषां वृषभाणां निग्रहणं क्षणमात्रस्य कार्यम्"



इति।

अपरः वदति- "मर्मस्थले प्रहृत्य नासारन्ध्रे दृढं ग्रहीतव्यम्" इति।

अन्यः वदति- "ते सर्वे वृषभाः अपि युगपत् एव युद्धार्थम् आगच्छन्तु नाम, अहं क्षणमात्रेण जित्वा जयम् उद्घोषयिष्यामि" इति।

एवं ते स्वप्रतापातिशयविषये विकत्थने शूराः एव आसन्।

एतत्समये एव नन्दस्य समीपं कुम्भकेन दूतः प्रेषितः आसीत्। सः डिण्डिमघोषवार्तां निवेद्य राजकुमारीपरिणयवार्ताम् अपि श्रावितवान्।

एतं विवाहमहोत्सवं द्रष्टुं नन्दः, यशोदा, कृष्णः, बलरामः, इतरे केचन बृन्दावनवासिनः गोपप्रमुखाः च कुम्भकगृहं प्रति प्रस्थितवन्तः।

कुम्भकः भगिनीम् आवुत्तं च स्वागतीकृत्य अन्तः नीतवान्। कुम्भकस्य पत्नी धर्मदादेवी यशोदां स्वागतीकृतवती।

कुम्भकस्य पुत्रः श्रीधामः कृष्णबलरामौ प्रीत्या आलिङ्ग्य तयोः उपवेशनार्थं पीठम् आनीय स्थापितवान्। सर्वे सन्तोषेण पायसादिकं स्वीकुर्वन्तः यथेष्टं भोजनं कृतवन्तः।

कृष्णस्य आगमनवार्तां श्रुतवतां दृप्तवृषभाणां दुष्टकार्याणि नितरां प्रवृद्धानि। ते धेनूः शृङ्गैः प्रस्तुम्फितवन्तः। अन्यान् वृषभान् अधः पातयित्वा कुम्भकस्य गृहसमीपम् एव आगतवन्तः। प्राङ्गणं प्रविश्य घुर्घुरायमानाः खुरैः भूमिं प्रताड्य धूलिम् उत्पाद्य अट्टहासं कुर्वन्तः घटादीनि पात्राणि चूर्णीकृतवन्तः। भित्तीः शृङ्गैः घट्टयन्तः मृत्तिकाः पातितवन्तः। वितानं पातयित्वा शकटं भञ्जितवन्तः। स्त्रियः बालाः च गृहस्य अन्तः एव स्थित्वा कोलाहलं कृतवन्तः। विविधदेशेभ्यः समागताः गोपाः कुत्रापि निलीय स्थितवन्तः। रात्रिकालः आसीत् इत्यतः तेषां वृषभाणां दुष्टकार्यं स्थगयितुं कोऽपि न शक्तवान्।

प्रातःकालः जातः। कुम्भकः गोपकान् सम्मेलितवान्। आभरणादिभिः अलङ्कृता



पुत्रीम् आनीय पुरतः स्थापयित्वा- "वीराधिवीराः गोपाकुमाराः! ह्यः रात्रौ भवद्भिः दृष्टं यत् ते वृषभाः कीदृशाः इति। एते दुष्टाः वृषभाः मदगजाः इव, क्रुद्धसिंहाः इव व्यवहरन्ति। एतेषां निग्रहणे कृताः सर्वे प्रयत्नाः विफलाः जाताः। राजाज्ञा अस्ति यत् एते निग्रहणीयाः इति। एतदर्थम् एव भवतः सर्वान् सम्मेलितवान् अस्मि। भवत्सु यः तान् निग्रहीतुं समर्थः भवति, सः कीदृशः वा भवतु नाम, तस्मै मम पुत्रीं दास्यामि। अतः भवन्तः एकैकशः प्रयत्नं कर्तुम् अर्हन्ति" इति उक्तवान्।

गोपकुमाराः इदानीं सन्देहे पतिताः। राजकुमारीं नीलादेवीं पश्यन्तः ते एकत्र उत्साहं प्राप्नुवन्ति। अपरत्र वृषभाणां दुष्टचेष्टां स्मरन्तः भीतिम् अपि अनुभवन्ति। अतः कुम्भकस्य वचनं श्रुत्वा अपि सर्वे मौनेन उपविष्टवन्तः।

तदा नन्दस्य बन्धुः घोषवान् उत्थाय- "एतान् वृषभान् अपि निग्रहीतुं यदि न शक्नुयां तर्हि मम पराक्रमेण किं वा प्रयोजनम्? क्षणाभ्यन्तरे एतान् एकैकशः जित्वा मारयिष्यामि" इति अभिमानेन वदन् भुजौ आस्फालयन् दर्पेण वृषभाणां समीपं गतवान्।

एतत् दृष्ट्वा भीताः जनाः भित्तीनां पृष्ठतः, वातायनानां पार्श्वे, वृक्षाणाम् उपरि च स्थित्वा किं प्रवर्तते इति कुतूहलेन द्रष्टुम् आरब्धवन्तः।

घोषवान् एकस्य वृषभस्य मूर्ध्नि बलेन ताडितवान्। प्रेक्षकाः एकस्वरेण हर्षोद्गारं कृतवन्तः। अपरे क्षणे ते सप्त अपि वृषभाः युगपत् एव तस्य उपरि आक्रमणं कृतवन्तः। स च प्रदेशः समग्रतया धूलिमयः कोलाहलपूर्णश्च जातः।

एतत् दृश्यं दृष्ट्वा कृष्णः बलरामम् उक्तवान्- "अग्रज! एते न वृषभाः। घोषवता किमर्थम् अत्युत्साहः प्रदर्शितः इति न जाने। तस्य मरणकालः सन्निहितः। वृषभाः तु मृत्युस्वरूपिणः" इति।

यावत् कृष्णस्य वचनं पूर्णतः न समाप्तं ततः पूर्वम् एव ते वृषभाः घोषवन्तं शृङ्गैः



गोपकुलस्य मानः धूलिसात् भवेत् च" इति। अनन्तरं कटिं बद्ध्वा वृषभाणां निग्रहणार्थम् अग्रे गतवान् च।

वृषभाणां समीपं गच्छन्तं कृष्णं दृष्ट्वा नन्दः यशोदा च उच्चैः आक्रन्दनं कृतवन्तौ- "हा हन्त! कृष्ण! अग्रे मा गच्छतु। कोऽपि कृष्णम् एतस्मात् प्रयत्नात् निवारयतु भोः" इति।

कोपेन मुष्टिं बद्ध्वा आगच्छन्तं कृष्णं दृष्टवन्तः ते वृषभाः। पूर्वजन्मनः शत्रुं दृष्टवतां तेषां कोपः नितरां प्रवृद्धः। अतः ते युगपत् एव कृष्णस्य उपरि आक्रमणं कृतवन्तः।

कृष्णः हस्तेन तेषां मुखेषु ताडितवान्। शृङ्गं गृहीत्वा नोदयन् तान् इतस्ततः अपसारितवान्। पुच्छग्रहणपूर्वकं तान् चोदितवान्। पृष्ठभागे मुष्ट्या ताडयन् तान् कोपितवान्।

एवं कृष्णः प्रेक्षकाणाम् आश्चर्यं जनयन् किञ्चित्कालं यापितवान्। वृषभाणां पादद्वयं गृहीत्वा तान् भ्रामयन् स्वयम् अपि किञ्चित्कालं भ्रान्तवान्।

एतां लीलां नीलादेवी अपि पश्यन्ती आसीत्। सा प्रेम्णा लज्जया च कृष्णं कटाक्षेण पश्यति। एतत् कृष्णः अपि लक्षितवान्। नवोत्साहं प्राप्तवान् च।

अन्ते कृष्णः एतां लीलां समापयितुम् इच्छन् बलवता मुष्टिप्रहारेण सप्तानां

प्रस्तुम्फ्य भूमौ पातयित्वा खुरैः मर्दयित्वा दूरे क्षिप्तवन्तः।

प्रेक्षकाः उच्चैः हाहाकारं कृतवन्तः। घोषवतः प्राणान् पीतवन्तः वृषभाः इदानीम् इतरगोपानाम् उपरि आक्रमणं कृतवन्तः। शृङ्गैः प्रस्तुम्फन्तः, खुरैः धूलिम् उत्पादयन्तः, दन्तैः दशन्तः च सर्वत्र सञ्चरितवन्तः। गोपवीराः प्राणरक्षणाशया इतस्ततः धावितवन्तः।

तदा कृष्णः बलरामम् उक्तवान्- "एते वस्तुतः वृषभाः न इति तु निश्चितम् एव। वृषभाणाम् एतादृशं सामर्थ्यं न भवति। इदानीं मया एव कार्यप्रवृत्तेन भाव्यम्। अन्यथा परिस्थितिः विषमतां गच्छेत्,



वृषभाणाम् अपि मूर्धभङ्गं कृतवान्। ते रक्तम् उद्वमन्तः भूमौ पतितवन्तः। एवं कालनेमेः पुत्राणां जीवनकथा समाप्ता अभवत्।

नन्दः यशोदा च अग्रे आगत्य कृष्णम् आलिङ्गितवन्तौ। कुम्भकः नीलादेव्याः हस्तं स्वहस्तेन गृहीत्वा तां कृष्णस्य समीपम् आनीय कृष्णस्य हस्ते तस्याः हस्तं स्थापयित्वा- "एषा विजयवधूः भवदीया। भवतः पराक्रमेण सन्तुष्टस्य मम एतत् उपायनम्" इति उक्तवान्।

अनन्तरं सः कृष्णाय वस्त्राभरणादीनि दत्त्वा नन्दाय यशोदायै च मङ्गलवस्तूनि दत्त्वा उक्तवान्- "भवतः पुत्रः असमानशूरः। तस्य दयया अस्माकम् उपरि आगता विपत् अपगता। अस्माकं मानः रक्षितः च। इतःपरं वयं निश्चिन्ततया स्थातुं शक्नुमः। नीलादेव्या सह सहस्रं गावः यौतकरूपेण प्रेषयिष्यामि। एतत् भवद्भिः कृपया अनुमन्तव्यम्" इति।

तदा नन्दः उक्तवान्- "किं वदति भवान्? मम समीपे एव असङ्ख्याः गावः सन्ति। कृष्णस्य जन्मानन्तरम् अभिवर्धमानायाः गोसम्पत्तेः गणना एव नास्ति। ग्रामे क्षीरप्रवाहः प्रवहति। यथेष्ठं घृतनवनीतादयः सन्ति। एवं स्थिते भवान् सहस्रं गावः प्रेषयति इत्यस्य कः अर्थः? वध्वाः आगमनेन एव वयं सन्तुष्टाः। पुनः गवां प्रेषणं सर्वथा मास्तु" इति।

तद्दिने आसायं महान् उत्सवः प्रवृत्तः। अनन्तरदिने नन्दयशोदादयः कृष्णबलरामादिभिः सह नीलादेव्या च सह वृन्दावनं प्रति प्रस्थितवन्तः। तैः सह श्रीधामः अपि गतवान्।

वृन्दावने दिनानि सन्तोषेण गच्छन्ति। युवकः कृष्णः पीताम्बरं धृत्वा शिखिपिच्छं शिरसि धृत्वा च वेणुं वादयन् सञ्चरति। कृष्णः यद्यपि एकः एव, तथापि सर्वत्र कृष्णः एव दृश्यते।

- एकदा बलरामः कृष्णः च पशुचारणार्थं यमुनातीरप्रदेशं गत्वा कस्यचित् वटवृक्षस्य अधः उपविष्टवन्तौ आस्ताम्। अन्ये गोपाः क्रीडायां मग्नाः आसन्।

तत्समये वामदेवः भरद्वाजः च तीर्थयात्रां कुर्वन्तौ तत्र आगतवन्तौ। विशालं वटवृक्षं दृष्ट्वा 'एतस्य माहात्म्यं किमपि स्यात्' इति भावयन्तौ प्रदक्षिणपूर्वकं नमस्कृत्य तत्रस्थान् गोपान् पृष्टवन्तौ- "बालाः! अत्र स्नानयोग्यः सर्पमकरादिभिः रहितः कोऽपि प्रदेशः अस्ति वा?" इति।



तदा एकः गोपः उक्तवान्- "अहं न जानामि। तं पृच्छतु" इति। सः गोपः अन्यं प्रदर्शयति। एवं वदन्तः अन्यं प्रदर्शयन्तः ते समयं यापयन्ति।

एतत् कृष्णः दृष्टवान्। सः सज्जनानां पीडाम् असहमानः तयोः समीपम् आगत्य विनयेन नमस्कृत्य उक्तवान्- "मान्याः, एते बालाः कार्याकार्यविवेकिनः न। बाल्यचापलेन ते एवं व्यवहरन्ति। कृपया अन्यथा न चिन्तनीयम्। स्नानयोग्यं प्रदेशम् अहं प्रदर्शयिष्यामि। तत्र स्नात्वा अनुष्ठानादिकं समाप्य अत्र आगच्छताम्। तत्समये अत्र दध्यन्नं सिद्धं भविष्यति। शर्करामिश्रितं पायसम् अपि भविष्यति। सद्यः दुग्धं क्षीरं पानार्थम् आनेष्यामः। एषः सत्कारः कृपया अङ्गीकरणीयः। वयम् अनुग्राह्याः च। अहं नन्दगोपस्य पुत्रः। कृष्णः इति मम नाम। एषः मम अग्रजः बलरामः" इति।

'गोपकुले एतादृशौ विनीतौ सज्जनौ च एतौ कथं जातौ?' इति आलोचयन्तौ तौ मुनिवरौ क्षणकालं नेत्रे निमील्य ज्ञानदृष्ट्या तयोः जन्मवृत्तान्तं ज्ञातवन्तौ।

अनन्तरं तौ- "कृष्ण! अद्य आवाम् अदृष्टबलात् भवतः दर्शनं प्राप्तवन्तौ। ब्रह्मादिदेवानाम् अपि अगोचरः भवान् अद्य अप्रयत्नेन आवयोः दृष्टिपथम् आगतः। एतेन आवां जन्म सार्थकं मन्यावहे। ययोः पुत्रः भवान् तौ मातापितरौ वस्तुतः अपि धन्यौ। भवद्दर्शनेन एव आवां नितरां सन्तुष्टौ। इतःपरं किं भोजनेन? आवाम् अतीव तृप्तौ। इतःपरं भोजनादिकं न इच्छावः" इति उक्त्वा ततः निर्गतवन्तौ।

एकदा कृष्णः यमुनानद्याः प्रवाहम् अनुसरन् तीरे गच्छन् बहुदूरं गतवान्। एवं गच्छन् सः एकं विशालं ह्रदं दृष्टवान्।

स च ह्रदः समुद्रः इव दृश्यते। तस्य उपरि

सर्वदा बाष्पं आवृतं दृश्यते। तस्य तीरे स्थिताः वृक्षलतागुल्मादयः म्लानाः शुष्काः च आसन्। केचन वृक्षाः तु बलराहित्येन पतिताः सन्ति अपि।

तरङ्गाणाम् अग्रे स्थिताः फेनाः कृष्णवर्णीयाः। तत्परिसरे पक्षिणः कीटाः वा न दृश्यन्ते। कोऽपि पशुः अपि तत्र न सञ्चरति। अकस्मात् तत्र अगताः पक्षिणः ह्रदे पतन्ति। एवं पतिताः पक्षिणः केनचित् क्रूरजन्तुना खाद्यते इव।

एतस्मिन् ह्रदे वस्तुतः कालियः नाम घोरः सर्पः निवसति। तस्य मुखतः विषज्वालाः निस्सरन्ति इति प्रथा श्रूयते। तस्य कालियसर्पस्य गरुडतः अपि भयम् नास्ति इति कृष्णेन श्रुतम् आसीत्। ह्रदस्य दर्शनेन सः कालियसर्पस्य घोरं स्वरूपम् ऊहितुं शक्तवान्।

'एतस्मिन् ह्रदे प्रविश्य एवः कालियसर्पः अवश्यं मारणीयः। तदा एव एतत् यमुनाजलं सर्वोपयोगयोग्यं भवेत्। एतस्य कालियस्य परिवारीयाः इतरे सर्पाः वृन्दावने सञ्चरन्तः जनान् तदा तदा पीडयन्ति। कालियस्य मर्दनेन तेषां पीडा अपि निवारिता भविष्यति। वृन्दावनस्थाः गोपाः भीतिं विना सर्वत्र सञ्चारं कर्तुम् अर्हन्ति' इति आलोचितवान् कृष्णः।

एवं चिन्तयन् सः ह्रदस्य तीरं परिशीलितवान्। तटे पर्णादिरहितः शुष्कः कश्चन कदम्बवृक्षः तेन दृष्टः। 'एतस्मात् वृक्षतः उत्प्लवनं कृतं चेत् ह्रदस्य मध्यभागः प्राप्तुं शक्यते' इति निश्चित्य सः प्रत्यागतवान्। एतस्य निश्चयस्य विषयं सः कमपि न उक्तवान्।

सः कक्षे स्थितां रज्जुं पार्श्वे क्षिप्तवान्। वेणुं मित्रस्य हस्ते दत्तवान्। पादरक्षाम् एकत्र स्थापितवान्। वस्त्रेण कटिं बद्ध्वा कदम्बवृक्षम् आरूढवान्। हस्तम् उन्नीय 'होऽऽ होऽऽ' इति ध्वनिम् उत्पाद्य ह्रदे उत्पतितवान्। कृष्णस्य उत्पतनतः जलं किञ्चिदुन्नतम् उत्पतितम्।





# शृगालसाहाय्यम्

बहुभ्यः वर्षेभ्यः पूर्वं चीनादेशे अण्टाकः नाम कश्चन निर्धनः आसीत्। तस्य सम्पत्तिः नाम एकः दाडिमवृक्षः। तस्य वृक्षस्य पालने पोषणे च तदीयः समग्रः समयः गच्छति स्म। विशेषतः दाडिमानि यदा पक्वानि भवन्ति तदा अण्टाकः वृक्षस्य पार्श्वे एव उपविश्य जागरूकतया रक्षणं करोति।

एतस्मिन् वर्षे दाडिमवृक्षेण बहूनि फलानि फलितानि। फलानि यदा पक्वानि भवन्ति तदा अण्टाकः वृक्षस्य पार्श्वे एव उपविशति खलु? एवम् उपविष्टः अण्टाकः एकस्मिन् दिने अजानन् एव निद्रावशं गतः। यावत् सः जागरितः ततः पूर्वं कानिचन फलानि अदृश्यतां गतानि आसन्।

अनन्तरदिने अपि एतेन एव क्रमेण पुनः कानिचन फलानि अदृश्यतां गतानि।

तृतीये दिने अण्टाकः दृढं निश्चितवान् यत् अद्य दाडिमफलचोरः ग्रहीतव्यः एव इति। अतः सः निद्राम् अभिनयन् जागरूकः एव उपविष्टवान्। तदा कश्चन शृगालः प्राकारम् अतिक्रम्य वृक्षस्य समीपम् आगच्छत्। यावत् शृगालः वृक्षस्य उपरि उत्प्लुतवान् तावता अण्टाकः अपि उत्प्लुत्य तस्य पुच्छं दृढं गृहीतवान्। तथापि शृगालः कथञ्चित् विमोचनं प्राप्य पलायनम् अकरोत्।

अनन्तरदिने अण्टाकः शृगालग्रहणार्थम् अन्यम् एव उपायम् आश्रितवान्। यत्र शृगालः प्राकारम् आरुह्य उत्प्लवन करोति तत्र सः शक्तियुतं निर्यासं स्थापितवान्। एतेन तत्र आगतः शृगालः निर्यासस्य उपरि पादं संस्थाप्य अग्रे गन्तुम् अशक्तः सन् तत्रैव उपाविशत्। अण्टाकः तस्य समीपं गत्वा दण्डेन ताडनार्थम् उद्युक्तः अभवत्।

तदा शृगालः अवदत्- ''मां भवान् यदि

"चीनादेशस्य जानपदकथा"



त्यजति तर्हि अहं भवतः हितं साधयिष्यामि। यदि भवान् इच्छेत् तर्हि भवतः राजकुमार्याः च विवाहम् अपि कारयेयम्" इति।

"किं भवान् मम दारिद्र्यं दृष्ट्वा उपहसति? जन्मना दरिद्रं मां राजकुमारी किं, सामान्या कन्या अपि परिणेतुं न इच्छति। एतावत् अपि अहं न जानामि इति चिन्तयति वा भवान्?" इति पृष्टवान् अण्टाकः।

तदा शृगालः पुनः पुनः अवदत्- "वस्तुतः अपि राजकुमार्याः भवतः च विवाहं कारयिष्यामि" इति। एतस्मिन् वचने विश्वस्य अण्टाकः शृगालम् उन्नीय गमनार्थम् अनुमतिं दत्तवान्।

ततः प्रस्थितः शृगालः साक्षात् नद्याः अपरस्मिन् तीरे स्थितं राजभवनम् अगच्छत्। महाराजम् अवदत् च- "महाराज! भवतः समीपे रत्नपरिशोधनार्थं चालनी अस्ति इति श्रुतम्। तां चालनीम् आनेतुम् आदिश्य माम् अस्माकं महाराजः प्रेषितवान्। तस्य समीपम् अनेककण्डोलमितानि रत्नानि आगतानि सन्ति। चूर्णेभ्यः रत्नखण्डान् पृथक्कृत्य सः चालनीं प्रत्यर्पयिष्यति। अहम् एव प्रत्यानीय दास्यामि" इति।

राजा रत्नपरिशोधनार्थं चालनीम् आनीय दत्तवान्। शृगालः तत् नीत्वा चालन्याः रन्ध्रेषु वज्र-वैढूर्यादीनां कणान् स्थापयित्वा चालनीं प्रत्यानीतवान्। चालनीं सम्यक् विधूय राज्ञः पुरतः स्थापितवान्। तदा वज्रादीनां चूर्णानि तत्र पतितानि। तानि स्वीकर्तुम् उत्सुकाः राजकुमार्यः अहमहमिकया अग्रे आगतवत्यः।

"भवत्यः रत्नस्य अपेक्षां यदि पूर्वम् एव प्रकटितवत्यः स्युः तर्हि अहम् अस्माकम् अण्टाकराजतः राशिरूपेण रत्नानि उष्ट्राणाम् उपरि आरोप्य आनयेयम्" इति अवदत् शृगालः।

'तादृशः अण्टाकमहाराजः यदि मम जामाता भवेत् तर्हि वरं स्यात्' इत्यालोच्य महाराजः शृगालं पृष्टवान्- "रत्नानां विषयं त्यजतु नाम। भवान् मध्यवर्तिरूपेण स्थित्वा सः अण्टाकराजः मम राजकुमारीषु काञ्चित् यथा परिणयेत् तथा कर्तुं शक्नुयात् वा?" इति।

"तत् इदानीं झटिति निर्णेतुं न शक्यते। अस्माकम् अण्टाकमहाराजः विवाहम् इच्छति वा न वा इति प्रथमं ज्ञातव्यम्। विचार्य सूचयिष्यामि" इति अवदत् शृगालः।

सः अण्टाकस्य समीपम् आगत्य अवदत्- "भवतः अदृष्टं फलितम्। राजकुमारीं भवते दातुं सिद्धः अस्ति महाराजः। विवाहार्थं सिद्धः भवतु" इति।

तदा अण्टाकः आश्चर्येण- "राजकुमार्याः विवाहार्थं कियत् धनम् आवश्यकम्! महान् सन्नाहः अपेक्षितः! मम समीपे तु वराटिका अपि नास्ति" इति अवदत्।

"उपायेन सर्वं साधयितुं शक्यते। भवान् प्रस्थानं करोतु। शिष्टम् अहं पश्यामि" इति अवदत् शृगालः।

उभौ अपि नदीसमीपम् आगतवन्तौ। कण्ठपर्यन्ते जले अण्टाकं स्थापयित्वा शृगालः नदीम् अतिक्रम्य राजसमीपम् आगच्छत्।

"महाराज! चत्वारिंशतः उष्ट्राणाम् उपरि नव रत्नानि आरोप्य अस्माकं महाराजः विवाहार्थम् आगच्छन् आसीत्। तत्समये महापूरवशात् सर्वम् ऐश्वर्यम् उष्ट्राः च नद्यां विलीनाः। इदानीं किं करणीयम् इति न ज्ञायते। अस्माकं महाराजः जले एव अस्ति" इति आतङ्कं प्रकटयन् महाराजम् अवदत् शृगालः।

तदा राजा- "गतं न शोचयेत् प्राज्ञः।



प्रवृत्तस्य विषये खेदेन किं प्रयोजनम्?" इति वदन् भाविनः जामातुः निमित्तम् उत्तमानि वेषभूषादीनि स्वीकृत्य परिवारेण सह नद्याः तीरस्य समीपम् आगतवान्।

अण्टाकः भाविना श्वशुरेण दत्तानि राजोचितानि वेषभूषादिकानि धृत्वा महाराजेन सहैव राजप्रासादं प्रति गतवान्।

महाराजस्य तृतीयपुत्र्याः अण्टाकस्य च विवाहः सवैभवं सम्पन्नः। विवाहसमारम्भस्य समाप्तेः अनन्तरम् अण्टाकः चिन्ताग्रस्तः अभवत्। सः शृगालम् उक्तवान्- "एतावत्पर्यन्तं तु सर्वं सुसम्पन्नम् अभवत्। इतःपरं यदा पत्न्या सह इतः गच्छामि तदा मदीयं रहस्यं सर्वं प्रकटितं भविष्यति। तदा किं करिष्यामि? महाराजः मां निश्चयेन



दण्डयिष्यति'' इति।

''तद्विषये भवतः चिन्ता मास्तु। अहम् अस्मि खलु? भीतिः किमर्थम्?'' इति अपृच्छत् शृगालः।

केषाञ्चित् दिनानाम् अनन्तरं राजा उत्तमे मुहूर्ते स्वपुत्रीं जामात्रा सह सपरिवारं पतिगृहं प्रेषितवान्। शृगालः अग्रे अधावत्।

मार्गे तात्कालिकवसतौ निवसन् उष्ट्रैः सह स्थितः कश्चन वणिक् शृगालेन दृष्टः।

शृगालः उष्ट्राणां स्वामिनं तं वणिजम् अवदत्- ''हा हन्त! लुण्टाकानां गणः वेगेन आगच्छन् अस्ति। अद्य भवतः प्रस्थानस्य मुहूर्तः उत्तमः न आसीत्। भवतः समग्रा सम्पत्तिः एकक्षणाभ्यन्तरे लुण्ठिता भविष्यति'' इति।

उष्ट्राणां यजमानः वणिक् शृगालेन सूचितायां दिशि दृष्टिं प्रसारितवान्। तत्र उद्गच्छन्ती धूलिः तेन दृष्टा। सः भीत्या शृगालम् उक्तवान्- ''इदानीं किं करोमि? मम प्राणान् कथं रक्षामि?'' इति।

''अहम् एकम् उपायं वदामि। यदा ते आगत्य पृच्छन्ति तदा भवान् एतत्सर्वम् अण्टाकमहाराजस्य इति वदतु। तदा ते मौनम् इतः गच्छन्ति। भवतः कोऽपि अपायः न भविष्यति'' इति अवदत् शृगालः।

अनन्तरं शृगालः अग्रे अगच्छत्। किञ्चित्कालानन्तरं राजसेवकाः तत्र आगतवन्तः। राजकुमार्या सह स्थिताः ते उष्ट्रस्य यजमानं वणिजं पृष्टवन्तः- ''एते उष्ट्राः, एषा सम्पत्तिः च कस्य?'' इति। शृगालेन यथा सूचितं तथैव- ''एतत्सर्वम् अण्टाकमहाराजस्य'' इति अवदत् उष्ट्राणां यजमानः।

अग्रे गतः शृगालः कञ्चित् अश्वानां यजमानम् एवम् एव भाषितवान्। अनन्तरं अजापालकम् अन्यम् अपि एवम् एव उक्त्वा भाषितवान्। यदा राजकुमार्याः परिवारजनाः आगत्य- ''एते अश्वाः कस्य?'' इति, ''एते अजाः कस्य?'' इति च यदा पृष्टवन्तः तदा तौ शृगालेन यथा सूचितं तथैव- ''एते अण्टाकमहाराजस्य'' इति उक्तवन्तौ।

अन्ते शृगालः कस्यचित् राक्षसस्य दुर्गस्य समीपम् आगच्छत्। धावनपूर्वकम्

आगच्छन्तं शृगालं राक्षसः अपृच्छत्- "एवं धावतः भवतः भीतेः कारणं किम्?" इति।

"कारणं किमिति वदामि? लुण्टाकाः इतः एव आगच्छन्तः सन्ति। ते क्रूराः लक्षशः सन्ति। भवान् अपि प्राणरक्षणोपायं प्रथमं पश्यतु। अन्यथा अन्तिमान् क्षणान् गणयतु" इति अवदत् शृगालः।

राक्षसः भीत्या पृष्टवान्- "अहं कुत्र गच्छामि? किं करोमि?" इति।

"अन्यत्र गमनार्थं कुत्र समयः? भवान् अत्रैव कुत्रापि निलीय तिष्ठतु। स्थूलकायः खलु भवान्? अतः चुल्ल्याम् एव उपविशतु। भवान् यथा न दृश्येत तथा चुल्लेः उपरि काष्ठानि स्थापयिष्यामि" इति असूचयत् शृगालः।

राक्षसेन चुल्ल्याम् उपविष्टम्। शृगालः तदुपरि काष्ठानि स्थापयित्वा अग्निना ज्वालितवान्। राक्षसः तत्रैव भस्मीभूतः अभवत्। शृगालः राजकुमारीपरिवारसमीपं गत्वा तान् सर्वान् राक्षसराजस्य दुर्गं प्रति आनयत्। तत् दुर्गम् अण्टाकराजस्य एव इति मन्यमानाः परिवारजनाः राजकुमारी च अतीव सन्तुष्टाः।

अण्टाकः तु यौतकरूपेण आगतैः सेवकैः सेव्यमानः पत्न्या सह सुखेन दिनानि यापितवान्। शृगालः अपि तैः सह एव न्यवसत्।

एकदा शृगालः अण्टाकस्य समीपम् आगत्य अपृच्छत्- "मया भवतः उपकारः कृतः खलु? मम उपकारस्य ऋणं कथं प्रत्यर्पयिष्यति? अहं मृतः चेत् मां किं करिष्यति?" इति।

"भवन्तं शिरसा धारयिष्यामि" इति उत्तरं दत्तवान् अण्टाकः।

अल्पे एव काले शृगालः प्राणान् अत्यजत्। पूर्वं यथा वचनं दत्तं तदनुगुणम् अण्टाकः शृगालचर्मणा निर्मितं शिरस्त्रं शिरसा धृतवान्। इदानीम् अपि तस्मिन् प्रान्ते शृगालचर्मणा निर्मितस्य शिरस्त्रस्य धारणक्रमः अनुस्रियमाणः अस्ति।





# राजसत्कारः

कस्मिंश्चित् ग्रामे रामशास्त्री नाम कविः आसीत्। सः कदाचित् वस्तूनि क्रेतुम् आपणं गतवान्। तत्समये आपणिकः भूपतिः केनचित् सह वार्तालापं कुर्वन् सन्दर्भानुगुणं सूक्तीः उदाहरन् आसीत्। रामशास्त्री तादृशीः सूक्तीः श्रद्धया श्रुतवान्। वस्तूनि क्रीत्वा गृहं प्रत्यागतवान् च।

आपणिकेन भूपतिना उक्तानां सूक्तीनां तत्त्वस्य आधारेण रामशास्त्री रात्रौ उपविश्य कानिचन पद्यानि रचितवान्। प्रातःकाले स्वग्रामीणस्य भूस्वामिनः पुरतः तानि पद्यानि पठितवान् च।

तानि श्रुत्वा भूस्वामी अतीव सन्तुष्टः। सः उपायनरूपेण रामशास्त्रिणे पञ्चाशत् सुवर्णनाणकानि दत्त्वा प्रेषितवान्।

बहुमानधनेन सह रामशास्त्री आपणिकस्य भूपतेः समीपं गत्वा– "पश्यतु भूपतिवर्य! मम पद्यानि कानिचन भूस्वामिनः पुरतः पठितवान्। तेन सन्तुष्टः सः एतानि सुवर्णनाणकानि दत्तवान्" इति वदन् नाणकानां स्यूतं भूपतये प्रदर्शितवान्।

भूपतिः आश्चर्येण– "एवं वा! महान् सन्तोषः!" इति उद्गारं प्रकटितवान्।

रामशास्त्री हसन्– "भवता उदाहृतानि नीतिवाक्यानि एव मम पद्यानां सारः" इति उक्तवान्।

रामशास्त्रिणः प्रशंसया सन्तुष्टः भूपतिः तम् उपवेष्टुं सूचितवान्। "भवान् श्रोतुं सिद्धः चेत् अहम् इतोऽपि अपूर्वाः कल्पनाः श्रावयितुं शक्नोमि। तेषाम् आधारेण भवान् पुनः अपि पद्यानि रचयितुम् अर्हति" इति सगर्वम् उक्तवान् च।

तद्दिनतः रामशास्त्री कार्यं भवतु वा मा वा, भूपतेः आपणे किञ्चित्कालम् उपविश्य

आगच्छति। भूपतिः तु आगतान् उद्दिश्य बहु वदति। रामशास्त्री ततः उत्तमान् अंशान् केवलं गृह्णाति।

एकदा भूपतिः पक्षिणां जीवनक्रमविषये ध्वनिसङ्केतविषये च बहु उक्तवान्। रामशास्त्री तस्य कथनस्य सारं सङ्गृह्य कानिचन पद्यानि लिखितवान्। पार्श्वग्रामीणस्य भूस्वामिनः पुरतः तानि पठितवान् च।

तानि श्रुत्वा सन्तुष्टः भूस्वामी रामशास्त्रिणे शतं सुवर्णनाणकानि दत्तवान्।

एषा वार्ता भूपतिना अपि ज्ञाता।'भस्मावृतः अग्निः इव मयि विशेषप्रतिभा अस्ति' इति भावितवान् भूपतिः। अतः तदीयः अहङ्कारः प्रवृद्धः। आत्मानं सम्माननयोग्यं चिन्तयति सः।

वस्तुतः तु भूपतेः वचनेषु सत्त्वहीनाः अंशाः एव बहवः भवन्ति। तथापि सत्त्वयुताः अंशाः न भवन्ति इति न। तादृशान् अंशान् केवलं मनसि स्थापयति रामशास्त्री।

एकदा भूपति राज्यपरिपालनविषये बहुधा उक्तवान्। रामशास्त्री तस्य सारं सङ्गृह्य स्वप्रतिभया कानिचन पद्यानि लिखितवान्। तानि गुणेन अत्युत्तमानि आसन्।

'एतानि महाराजस्य पुरतः यदि पठेयं तर्हि विशेषादरः लभ्येत' इति आलोचितवान् रामशास्त्री। अनन्तरदिने एव ततः प्रस्थाय राजदर्शनं प्राप्य तानि पद्यानि श्रावितवान्। राजा तु तानि श्रुत्वा अतीव सन्तुष्टः।

"कविवर्य! भवता त्रिचतुराणि दिनानि



अस्माकम् आतिथ्यम् अङ्गीकरणीयम्। अनन्तरं नगरप्रमुखाणां पुरतः भवतः सम्माननं करिष्यामि'' इति उक्तवान् राजा।

रामशास्त्री एतं प्रस्तावम् अङ्गीकृतवान्। रामशास्त्रिणः सम्माननवार्ता भूपतिना अपि श्रुता। सः त्वरया राजधानीम् आगतवान्।

सम्माननदिने राजा तानि पद्यानि रामशास्त्रिणः मुखात् वाचितवान्। कवेः प्रतिभां दृष्ट्वा सभ्याः सर्वे सन्तुष्टाः। राजा रामशास्त्रिणः कण्ठे पुष्पमालां स्थापितवान्। सहस्रेण सुवर्णनाणकैः सत्कृतवान् च।

भूपतिः सभायाम् उपविश्य एतत्सर्वं पश्यन् आसीत्। तस्य मनसि इदानीम् ईर्ष्या उत्पन्ना।

सः तत्रैव उत्थाय– ''प्रभो! रामशास्त्रिणे सत्काररूपेण यत् दत्तं तत्र अर्धांशः मह्यं दातव्यः। सः मम मुखात् विषयं ज्ञात्वा एव कवितां रचितवान्'' इति वदन् पूर्वं प्रवृत्तं समग्रं निवेदितवान्।

एतत्सर्वं श्रुत्वा राजा मन्दहासं प्रकटयन् सेवकम् इक्षुदण्डम् आनेतुम् आदिष्टवान्। यदा सेवकेन इक्षुदण्डः आनीतः तदा तम् इक्षुदण्डं भूपतेः हस्ते स्थापयित्वा पृष्टवान् राजा– ''एतस्मात् इक्षुदण्डतः कियत्परिमाणकं गुडं प्राप्तुं शक्नुयाम वयम्?'' इति।

''प्रभो! एतस्य प्रश्नस्य उत्तरम् अहं तु वक्तुं न शक्नोमि। अन्योऽपि वक्तुं न शक्नोति इति अहं भावयामि। इक्षुदण्डं निष्पीड्य क्वथयित्वा खलु गुडस्य परिमाणं ज्ञातव्यम्?'' इति उक्तवान् भूपतिः।

तदा राजा उक्तवान्– ''रामशास्त्रिणे भवता ये विषयाः सूचिताः ते सर्वे इक्षुदण्डसदृशाः। रामशास्त्री तु स्वप्रतिभया कविताशक्त्या च उत्तमानि पद्यानि ततः रचितवान्'' इति।

इदानीं भूपतिः आत्मनः दोषं ज्ञातवान्। अतः सः राजानं रामशास्त्रिणं च मौनं नमस्कृत्य राजसभातः निर्गत्य स्वग्रामं प्राप्तवान्।



# समयस्फूर्तिः

नीलमणिः राजप्रासादस्य रजकः। सः रात्रौ उत्तमानि वस्त्राणि धृत्वा नगरे अटति। एतादृशे अटने तस्य विशेषोत्साहः। तद्देशीयः राजा अपि वेषपरिवर्तनं कृत्वा नगरे सञ्चरन् प्रजानां योगक्षेमं जानाति। एकस्यां रात्रौ वेषान्तरं धृत्वा सञ्चरता महाराजेन नीलमणेः मेलनं जातम्।

मुनिवेषधारिणं महाराजं रजकः नीलमणिः दर्पेण पृष्टवान्- "अस्मिन् मध्यरात्रे कुत्र गच्छन् अस्ति भवान्?" इति।

"धर्मशालां प्रति वत्स!" इति राजा विनयेन उक्तवान्।

"धर्मशालां प्रति, उत चौर्यार्थम्? भवादृशाः कपटवेषधारिणः संन्यासिनः चौर्यं कुर्वन्ति इति अहं जानामि। अतः एव अहम् एवं रात्रौ सञ्चारं करोमि" इति उक्तवान् नीलमणिः।

"क्षाम्यतु माम्। भवतः परिचयः न प्राप्तः मया" इति उक्तवान् राजा।

"अहम् अस्मि एतस्य देशस्य राजा" इति वदन् श्मश्रूणि स्पृष्टवान् नीलमणिः।

"यथाज्ञापयति देवः। इतःपरं रात्रौ एवं सञ्चारं न करिष्यामि" इति वदन् उद्गच्छन्तं कोपम् अन्तः निगृह्य अग्रे गतवान् राजा।

मुनेः चलनरीतेः दर्शनेन नीलमणिना ज्ञातं यत् एषः स्वयं महाराजः एव इति। शरीरे क्षणकालं कम्पनम् आरब्धम्। किन्तु क्षणान्तरे सः एकम् उपायं चिन्तितवान् एव।

सः धावन् राजसमीपं गत्वा- "स्वामिन्! क्षाम्यतु माम्। भवतः तपःशक्तेः परीक्षणार्थं मया एवम् अभिनयः कृतः। किन्तु अहं महाराजस्य सेवकः रजकः इति भवता दिव्यदृष्ट्या ज्ञातम् इति अहं जानामि। औद्धत्यार्थं क्षन्तव्यः अयं मूर्खजनः" इति वदन् साष्टाङ्गं नमस्कारं कृतवान्।

राजा यद्यपि कुपितः, तथापि नीलमणेः समयस्फूर्तिं दृष्ट्वा सन्तुष्टः अभवत्। सः हसन् शिरः चालयन् अग्रे गतवान्। "देवो दयालुः" इति वदन् गृहं प्रत्यागतः नीलमणिः पुनः कदापि रात्रौ वेषान्तरं धृत्वा न अटितवान्।





# वचनैः प्रहारः

गोविन्दपुरस्य भूस्वामी ज्वालाप्रसादः कदाचित् सायङ्काले आप्तसाहाय्यकेन दिवाकरेण सह वायुविहारार्थं गतवान्। प्रत्यागमनसमये मार्गे तेन एकं फलपूर्णम् आम्रोद्यानं दृष्टम्।

पक्वानि आम्रफलानि तत्र असङ्ख्यानि आसन्। एतां प्रकृतिरमणीयतां पुनः पुनः दृष्ट्वा भूस्वामी सन्तुष्टः।

तदा तेन सह स्थितः दिवाकरः उक्तवान्-''इतः पूर्वं भवता एतेन मार्गेण न आगतम् इति भाति। अतः एतत् उद्यानम् इतः पूर्वं न दृष्टम्। वस्तुतः एतत् अस्माकम् एव'' इति।

''एवं वा? एतत् अस्माकम् एव वा?'' इति आश्चर्येण सन्तोषेण च मन्दं शिरः चालयित्वा क्षणकालानन्तरम् - ''एतस्य समीचीनस्य आम्रोद्यानस्य रक्षणार्थं कुतो वा व्यवस्था न कृता? रक्षणव्यवस्था अस्ति चेदपि एषु दिनेषु चौर्यं प्रचलति। एवं स्थिते रक्षकरहितत्वे का कथा? अद्य एव एतस्य रक्षणार्थम् एकं योजयतु'' इति असमाधानेन उक्तवान् भूस्वामी।

''प्रभो! भवता अन्यथा गृहीतम्। एतस्य सुयोग्या रक्षणव्यवस्था अस्ति एव। दामोदरनामकः एतस्य रक्षकः। बहोः कालतः अहं तं जानामि। सः विश्वासार्हः,श्रद्धया कार्यं करोति च। तस्य उपस्थितौ चौर्यस्य नाम एव न श्रूयते। प्रायः सः अद्य कार्यान्तरार्थं कुत्रापि गतवान् स्यात्'' इति विनयेन निवेदितवान् दिवाकरः।

तत्समये वृक्षस्य च्छायायाम् उपविष्टा काचित् वृद्धा दिवाकरेण दृष्टा।

तां प्रदर्शयन् सः भूस्वामिनम् उक्तवान्-''तत्र पश्यतु। स्वमातरं रक्षणकार्ये नियोज्य

गतवान् अस्ति दामोदरः। तस्याः उपस्थितौ फलं स्प्रष्टुं कस्यापि धैर्यं न भवति" इति।

भूस्वामी आश्चर्येण उक्तवान् - "एतस्याः वृद्धायाः तु सम्यक् स्थातुम् अपि शक्तिः नास्ति। एषा कथं वा सम्यक्तया उद्यानरक्षणं कुर्यात्? यदि कोऽपि आम्रफलानां चौर्ये उद्युक्तः इत्येव चिन्तयेम तदा एषा किं वा कुर्यात्? एतां दृष्ट्वा चोरः किं भीतः भवेत्? हुं, एषा एकत्र उपविशति, अपरत्र चौर्यं प्रचलिष्यति" इति।

तदा दिवाकरः उक्तवान् - "दण्डप्रहारं विना अपि चोरान् दुष्टचेष्टापरान् बालकान् च निवारयितुं शक्यते श्रीमन्! एतस्याः जिह्वा अतीव तीक्ष्णा। इतः पूर्वं बहुवारं वचनप्रहारेण एषा जनान् भापितवती इति मया श्रुतम्" इति।

अनन्तरं भूस्वामी दिवाकरश्च मन्दम् आम्रोद्यानं प्रविश्य एकस्य वृक्षस्य अधः स्थितवन्तौ।

'अपरिचिताः अन्तः प्रविष्टाः सन्ति' इति ज्ञात्वा सा वृद्धा मन्दम् उत्थाय तयोः समीपम् आगतवती।

किञ्चित् अग्रे गत्वा हस्तलभ्यानि फलानि स्वीकरणीयानि इति यदा भूस्वामी उद्युक्तः तदा तेन तत्र चरन्तौ सुदृढौ वृषभौ दृष्टौ।

अतः सः अग्रगमनं स्थगयन् तत्र आगतां वृद्धां पृष्टवान्- "मातः! एतौ वृषभौ तु न प्रस्तुम्फतः खलु?" इति।

दृष्टिमान्द्यात् वृद्धा पुरतः स्थितस्य



परिचयं न प्राप्तवती। सा क्रोधपूर्णेन स्वरेण उक्तवती - "भवन्तौ किमर्थम् आगतवन्तौ इति अहं जानामि। एतौ वृषभौ प्रस्तुम्फतः वा न वा इति न जानामि। एतावत् तु जानामि यत् तौ तृणं केवलं चरतः चेदपि अन्यस्य क्षेत्रम् अक्रमं न प्रविशतः" इति।

वृद्धायाः वचनस्य तैक्ष्ण्येन ताडितः भूस्वामी मौनं ततः बहिः आगतवान्। दिवाकरः अपि मौनं तम् अनुसृतवान्।

एतयोः दिशि एव पश्यन्ती सा वृद्धा क्षणकालम् अस्पष्टं किमपि वदन्ती आसीत्। अनन्तरं पुनः अपि वृक्षस्य मूले यथापूर्वम् उपविष्टवती।

आम्रोद्यानतः बहिः आगतः दिवाकरः भूस्वामिनम् उक्तवान्- "दृष्टं खलु श्रीमन्, दुर्बलायाः अपि तस्याः वृद्धायाः वचनस्य तैक्ष्ण्यम्? विवेकिने एषः एकः एव वचनप्रहारः अलम्" इति।

"भवतः वचनं सत्यम् एव" इति वदन् अङ्गीकारपूर्वकं शिरः चालितवान् भूस्वामी।

यावत् ते ततः किञ्चिद्दूरं गतवन्तः तावता कार्यान्तरं समाप्य प्रत्यागच्छन् दामोदरः सम्मिलितः।

एतौ दृष्ट्वा सः दामोदरः विनयेन नमस्कृतवान्।

"एषः एव वा उद्यानरक्षकः सोऽयं दामोदरः?" इति पृष्टवान् भूस्वामी।

"आं श्रीमन्!" इति उक्तवान् दिवाकरः।

भूस्वामी सन्तोषपूर्णया दृष्ट्या दामोदरं पश्यन् "दामोदर! भवतः हस्ते स्थितस्य दण्डस्य प्रहारापेक्षया अपि भवतः मातुः वचनप्रहारः अधिकपरिणामकारी। एतानि नाणकानि स्वीकरोतु। भवतः मात्रे मम उपायनम् एतत्" इति उक्त्वा कोषतः दश सुवर्णनाकणानि दामोदरस्य हस्ते समर्प्य अग्रे गतवान्।

प्रवृत्तं किमपि अजानन् दामोदरः भूस्वामिदिवाकरयोः गमनम् एव निर्निमेषदृष्ट्या पश्यन् आसीत्।





## उन्नता नागफणी

नागफणीजातीयेषु सस्येषु 'शाग्वोरो' जातीयं सस्यम् अत्युन्नतं प्रवर्धते। २०० वर्षात्मके स्वजीवितावधौ एतत् सस्यं ४०-५० पादमितम् औन्नत्यं प्राप्स्यति। भारः च सामान्यतः १० टन् भवेत्। किन्तु अत्र ८०% जलांशः एव तिष्ठति।

## अग्निपर्वते अग्निपर्वतः!

अमेरिकादेशीयः अग्निपर्वतः वस्तुतः प्रागैतिहासिक-ज्वालामुख्याः अवशेषमात्रम् इति श्रूयते। १० की.मी विस्तृते अस्मिन् अग्निपर्वतप्रदेशे अन्यः अग्निपर्वतः दृश्यते!





## प्राणापहारकं शिलीन्ध्रम्

सामान्यशिलीन्ध्रवत् एव दृश्यमानम् 'डेथ् क्याप्' (अमानिटा फलाइड्स्) नामकं शिलीन्ध्रं विषमयं भवति। तत् ये खादन्ति ते कालराप्रभृतिभिः रोगैः पीडिताः भविष्यन्ति।

# निमित्तं किमिति वदामि?

| | |
|---|---|
| लक्ष्मीः– रमणि! भवती अपि अत्र! किम् अस्वस्था? | What Ramani! How is it you are also here? Aren't you feeling well? |
| रमणी– न भोः, मम ज्येष्ठपुत्रार्थम् औषधं नेतुम् आगतवती। | No. I have come to take some medicine for my eldest son. |
| ल – कदा आरभ्य सः अस्वस्थः? | Since when is he not well? |
| र – सप्ताहतः पूर्वम् ज्वरपीडितः अभवत्। इदानीं तु ज्वरात् मुक्तः। तथापि निश्शक्त्यादयः भवन्ति खलु। तन्निवेद्य औषधं नेतुम् आगतवती। भवती ....? | He had fever a week back. Now he is all right, but weakness persists, won't it? So I have come. What about you? |
| ल – अहं तु अत्र तदा तदा आगच्छामि एव। | I come here very often. |
| र – किंनिमित्तम्? | What for? |
| ल – हन्त! निमित्तं किमिति वदामि? कदाचित् कटिवेदनानिमित्तम्। पुनः कदाचित् पीनसज्वरादिनिमित्तम्। पुनः कदाचित् शिरोवेदनादिनिमित्तम्। | Oh yes, I will tell you why. Sometime with pain in the hips, sometime with minor problems like fever and at other times with headache. |
| र – औषधसेवनेन किमपि प्रयोजनं न सिद्धं वा? | No improvement after treatment? |
| ल – प्रयोजनं तु वैद्यस्य सिद्धं स्यात्। अहं तु औषधं सेवमाना एव अस्मि। रोगाः तु अनुवर्तन्ते एव। औषधसेवनेन एव अर्धम् उदरं पूर्यति इव। | The Doctor might be improving, I am going on medicines. Diseases are on the increase. Medicines fill half the stomach. |
| र – किमर्थं निर्वेदः? कर्तव्यं तु करणीयम् एव खलु? | Why feel disgusted? One should do his duty isn't it? |
| ल – सर्वं ललाटलिखितम्। किं करोमि? | It is fate after all, what can one do? |

No share prices,
no political fortunes, yet..

# Over 40% of Heritage readers are professionals or executives, 61% from households with a professional / executive as the chief wage earner. Half hold a postgraduate degree or a professional diploma.

– from an IMRB survey conducted in Oct 1986




It's an unusual magazine. It has a vision for today and tomorrow.

It features ancient cities and contemporary fiction, culture and scientific developments, instead of filmstar interviews and political gossip. And it has found a growing readership, an IMRB survey reveals. Professionals, executives and their families are reading The Heritage in depth – 40% from cover to cover, 42% more than half the magazine.

More than 80% of The Heritage readers are reading an issue more than once.

And over 90% are slowly building their own Heritage collection.

Isn't it time you discovered why?

## THE HERITAGE

**So much in store, month after month.**

